**अनूपो जाङ्गलो मिश्रस्त्रिधा देशो बुधैर्मतः।**

**तत्तत्स्वभावं विज्ञाय जलवृष्टिं निवेदयेत्।।**[१]

त्रिविधा भूमेर्लक्षणमपि तत्रैव वर्णितं ग्रन्थकारेण—

**नदीपल्लवशैलाढ्यः मृदुवातातपान्वितः।**

**अनेकवनशस्याढ्यः सोऽनूपो देश उच्यते।।**

**स्वल्पोदकतृणो यस्तु प्रवातः प्रचुरातपः।**

**स ज्ञेयो जाङ्गलो देशो बहुधान्यादि संयुतः।।**

**संसृष्टलक्षणो यस्तु देशः साधारणो मतः।**

**समा साधारणे यस्माच्छीतवर्षोष्णमारुतः।।**[२]

एवं सार्वत्रिकं सर्वेक्षणं विधाय तात्कालिकं वायस-पीपिलिकादेशशकुनं, धूम्रनिर्घातादिकमुत्पातानाञ्चावलोकनं कृत्वा वर्षणज्ञानं कर्त्तव्यम्।

एवं षट्सु ऋतुषु विशेषोपयोगिनं वर्षाऋतुं विज्ञायात्र वर्षाया वर्णनं संक्षेपेणोपस्थापितम्। ऋतुविज्ञानस्य प्रयोगशालायां सर्वकारैः नियुक्ता वैज्ञानिकाः सततमाकाशमधीत्य वृष्टिसम्बन्धि पूर्वसूचनां प्रसारयन्ति। परं ते भारतीय सिद्धान्तस्यानुसरणं न कुर्वन्ति। अतस्ते शतप्रतिशताः सफला न भवन्ति। यदि तैः भारतीयमृतुविज्ञानमपि अङ्गीक्रियते तदा लोककल्याण-दृष्ट्या वैज्ञानिकदृष्ट्या च महत्वावहं साफल्यं भवेदिति।



---

१. वृष्टि प्र. २२

२. ” ” २३, २४

# अयनांशविमर्शः

रेखागणितीयेन सिद्धान्तेन कयोरपि द्वयोर्वृत्तयोः सम्पातः स्थानद्वये एव भवति[१]। अतएव गोल-गणितेऽपि सर्वेषां महद्वृत्तानां लघुवृत्तानाञ्च सम्पात-स्थानं द्वयं द्वयं विद्यते। यथा पूर्वापर-क्षितिजयोरेकः सम्पातः पूर्वस्वस्तिकोऽ-परश्च पश्चिमस्वस्तिकः, याम्योत्तरोन्मण्डलयोरेकः सम्पातः सौम्यध्रुवोऽ-परश्च याम्यध्रुवो वर्तते। तथैव नाडी-क्रान्तिवृत्तयोः सम्पातः प्राच्यां विषुव-सम्पाताख्योऽपरश्च शरत् सम्पाताख्यः प्रतीच्याम्। इमावेवायनसंज्ञकौ स्तः। अनयोः सञ्चलनं युगपदेव भवति। ग्रहापेक्षया सम्पातयोः विपरीता गतिर्भवति। अर्थात् पश्चिमाभिमुखं गमनमनयोः सम्पातयोः। उभयोः सम्पातयोः सादृश्ये-नैकस्यैव विषुवाख्यस्य ग्रहणं कुर्वन्सन् विषयोपस्थापनमत्र क्रियते।

अयमेव विषुवसम्पातः अयनसम्पातः अयनविन्दुर्वा निगद्यते। मेषादि विन्दुतो अश्विन्यादितो वा यदन्तरमंशादिकं सम्पातस्य तदेवायनांशाः अत्र प्रतिपाद्याः।

अयनमुद्दिश्य चिरादेव विवादः प्रचलति। अस्मिन् विषये भारतीयानां पश्चात्यानामाधुनिकानां च कुत्रचित् साम्यं कुत्रचिच्च वैषम्यमद्यापि वर्तते। अयन-चलनस्य ज्ञानं भारतीयैः वैदिककालादेव कृतम् परं तस्य सम्यग्ज्ञानं सप्तविंशत्युत्तर चतुःशततमे वत्सरे शकाब्दे सञ्ज्ञातम्। ऋग्वेदे सम्पातस्थाने कृत्तिकानक्षत्रस्योल्लेखो विद्यते।[२] वेदाङ्गज्यौतिषे श्रीमता लगधेन धनिष्ठा नक्षत्र-स्योल्लेखः कृतः। अनन्तरं सप्तविंशत्युत्तरचतुःशततमे शकाब्दे वराह-मिहिरादिभिः सम्पातस्थाने उत्तराषाढाया अवलोकनं कृतम्। एवं सम्पातस्थाने नक्षत्रपरिवर्तनमवलोक्य तदानीन्तनैर्दैवज्ञैश्चिन्तितं यत् नक्षत्रचक्रमेव भ्रमति। एतेषां विदुषां परम्परायामयमेव सिद्धान्तः प्रचलितः। परं श्रीमता भास्करा-चार्येण शिष्टपरम्परां निर्वहन् सन् ब्रह्मगुप्तादीनामौदासीन्यं परिमार्जयन् इदं प्रतिपादितम् "येऽयन चलनभागाः प्रसिद्धास्त एव विलोमगस्य क्रान्तिपातस्य भागाः"[३]

---

१. रेखागणित अ. ३

२. ऋग्वेद

३. सि. शि गो. ब. अ.

अर्थात् मेषादिविन्दुतः सम्पातं यावत् यदन्तरं समुद्भवति तत् क्रान्ति पातस्यायनसम्पातस्य चलनत्वात् समुद्भवति न तु मेषादि विन्दोः। मेषादि विन्दुरश्विन्यादिविन्दुर्वा सर्वथा स्थिर एव। अत्रेदमपि वक्तुं शक्यते यदाधुनिकानामपि सम्पातयोः चलनविषये स्वल्पान्तरेणायमेवाशयः। तेषां मते मेषादि विन्दुश्चलः यत्र यत्र सम्पातस्तत्र तत्रैव मेषादि विन्दुरपि। अस्मादेव ते सायनगणनामेवांगीकुर्वन्ति। अयनचलनमुद्दिश्यापरो विवादोऽयमस्ति यत् पातस्य दोलात्मकं भ्रमणं भवति उत वा चक्रभ्रमणम्? सूर्यसिद्धान्ते स्पष्टोक्त्या प्रतिपादितं विद्यते यत् अयनसम्पातः सप्तविंशति अंशात्मकं यावत् प्राच्यां गत्वा पुनः मेषादि विन्दुमायाति ततः सप्तविंशत्यंशात्मकं यावत् प्रतीच्यां गत्वा पुनः मेषादिविन्दुमेति।[१] अपरः पक्षः मुञ्जालस्य वर्तते। एषां मतमस्ति यच्चक्रभ्रमणं भवति सम्पातस्य। प्रसङ्गेऽस्मिन् केचन आचार्याः सौरमतं केचन च मुञ्जालमतमनुसरन्ति। भास्कराचार्यः विषयेऽस्मिन् किञ्चिदपि स्पष्टरूपेण नोक्तवान्। तत्र कारणमिदमेव प्रतिभाति यत् दोलाभ्रमणस्वीकारेण तस्य यशसि म्लानत्वं सम्भवति चक्रभ्रमणस्वीकारे च वेदबाह्यत्वमुपलक्ष्यते। यतो हि चक्रभ्रमणसिद्धान्तस्वीकारे सति ऋतु[२] व्यवस्था विच्छिन्ना भविष्यति। मधुमाधवौ वसन्तः इत्यादिकं श्रुतिवचनमसङ्गतं भविष्यति। तदानीं चैत्रे वर्षा कदाचिच्चशरदृतुः समागमिष्यति। इत्येव मनसि सम्प्रधार्य मुनीश्वरेणोक्तं यत् मुञ्जालादयो वेदबाह्याः।[३] परमिदं विचार्यं वर्तते यत् वेदबाह्यत्वभिया चक्रभ्रमण सिद्धान्तो ग्राह्यस्त्याज्यो वा। विषयेऽस्मिन् पश्चात्यानामपि मतं चक्रभ्रमणस्यानुसरणं करोति। उभयोर्मतयोः समीक्षणं कृत्वा शंकरबालकृष्ण-दीक्षित-महोदयेनोक्तम्[४] यन् मेषान्तविन्दुतः कृत्तिकातो वा सम्पातस्य चलनं धनिष्ठा पर्यन्तमवलोक्य सिद्धान्तकारैः प्रतिपादितं यत् शून्यायनांशात् प्राक् पश्चाच् च सम्पातस्थानं दृष्टमतः सिद्ध्यति यत् क्रान्तिसदृशं पातस्यापि नियतस्थानात् परावर्तनं भविष्यति। यथा चतुर्विंशत्यंशात्मकं क्रान्तिरुत्तरा भवति। अनन्तरं

१. सूर्यसिद्धान्त ३, ९-१०
२. तै. सं. ४/४/११
३. सि. सि. मरीचि टीका
४. भारतीयज्योतिष पृ. ४४१

शून्यविन्दुमागत्य पुन:चतुर्विंशत्यंशांत्मकं यावत् याम्या भवति। एवमेवाय-नांशोऽपि सप्तविंशति अंशात्मकं यावत् गत्वा पुन: परावर्त्य शून्यविन्दुं आगमिष्यति। परमत्र २७ सप्तविंशत्यंशात्मकस्य काचिदुपपत्तिर्नास्ति अत: सिद्धान्तोऽयं काल्पनिक: इति वक्तुं शक्यते। अत: प्रथमदृष्ट्या आचार्य-मुञ्जालस्यैव मतं प्रामाणिकं सिद्धान्तसम्मतं च प्रतीयते। यथा चन्द्रविमण्डल-क्रान्तिमण्डलयो: सम्पात: राहुकेतु रूप: चक्रभ्रमणं करोति।

पातस्य गतिविषयेऽपि विभिन्ना: विचारा: समक्षमायान्ति। सूर्यसिद्धान्तानु-सारेण सम्पातस्य वार्षिकीगति: ५४ चतु:पञ्चाशत् कला वर्तते।[१] आचार्य मुञ्जालस्य मतेन एकोनषष्टिविकला:, द्वितीयार्यभटमतेन ४६.३ षट्चत्वारिं-शद्विकला: वार्षिकी गतिर्वर्तते। अनेके अन्ये आचार्या: अयन गतिं षष्टिविकलात्मिकामेव स्वीकृतवन्त:।

अस्मिन् प्रसङ्गे पश्चात्यानामप्येतिहास: विवेचनीय:। सर्वप्रथमं हिपार्क-समहोदयेनास्य सम्पातस्य चलनं अन्वेषितम्। परं तै:साधितं गतिमानं स्फुटं नासीत्। तदनन्तरं टालमीमहोदयेनास्य गतिरानीता। सा षट्त्रिंशद् विकला आसीत् तदनन्तरं टाइकोब्राहे महोदयेन ५१ विकलागतिरन्वेषिता। सर्वेषां मतानालोच्य वेसले महोदयेन एकोनविंशतिशततमे ईशाब्दे सपादपञ्च-षष्ट्युत्तरशतत्रय दिवसात्मकं वर्षमानं परिकल्प्य ५० पञ्चाशद्विकला गति: स्वीकृता। परमधुनातनीयोपलब्धीनामनुशीलनेनेदं प्रतिभाति यत् सम्पातस्य वास्तविकीगति: ५८ अष्टपञ्चाशद् वार्षिकी वर्तते। वेङ्कटेशबाबूकेतकर महोदयेनाऽपि इयमेव गति: स्वीकृता। इयं वास्तविकी गति: आचार्यमुञ्जालेन प्रतिपादितगत्या सह एक विकलात्मकमन्तरितं वर्तते।

यदि वयं अष्टपञ्चाशद् विकलात्मिकया गत्या अयनसंक्रमणस्य कालं गण्यामहे तदा द्विषष्टिमितेऽब्दे अंशात्मकं सम्पातस्य चलनं भवति। एवं १६७५ पञ्चसप्ततिषट्शदुत्तरसहस्रमितेब्दे २७ सप्तविंशत्यंशात्मकं सञ्चलनं भवति तथा त्र्यधिकसप्तत्युत्तरषट् सहस्रमितेऽब्दे दोलात्मकं भ्रमणं सम्पातस्य प्रपूर्यते। इदानीमयनांशा: २३/४१/२९ सन्ति। एवमद्यप्रभृति अष्टादशाधि-कशतद्वयवर्षानन्तरं अयनांशा: २७ सप्तविंशत्यंशं प्रपूर्य पुन: पुन: क्षीणत्वं गमिष्यन्ति। अर्थाद् अयनसम्पातस्य परावर्तनं दोलात्मकं भ्रमणं च सिद्धं

१. भारतीय ज्योतिष पृ. ४४२

भविष्यति। यदि च चक्रभ्रमणं भविष्यति तदा २७ सप्तविंशति अंशानान्तरमपि आयनांशा वृद्धिं गमिष्यन्ति। अस्यां स्थितौ २२३२० विंशत्युत्तरशतत्रयाधिक द्वाविंशतिसहस्रपरिमिते वत्सरे अयनसम्पातः स्वीयं चक्रभ्रमणं प्रपूरयिष्यति।

अन्ते च निष्कर्ष रूपेण इदमेव वक्तुं प्रभवामि यद् उपपत्तेरभावात् दोलात्मकं भ्रमणमसमीचीनमिति प्रतिभाति अतः सम्पातस्यापि चक्रभ्रमणमेव भविष्यति। यतोहि अस्य नियामकः कदम्बतारा नास्ति। कदम्बेनाकृष्टः क्रान्तिवृत्तः २४ चतुर्विंशात्मकमंशं यावत् सौम्ये याम्ये च गच्छति। परन्तु अत्र अयनगतौ भूमेः सार्धत्रयोविंशत्यंशात्मकं[१] नमनमेव वर्तते। एवं किञ्चिन्नमिता भूमिः सूर्यं परितो भ्रमति। अस्या चक्रभ्रमणकालः ३६५/१५/३१/३० पञ्चषष्ट्युत्तरशतत्रयदिवसाः पञ्चदशघटिकाः एकत्रिंशतकलाः त्रिंशद्विकलाश्च सन्ति। भूमेराकारो वतुलो नास्ति अपि तु वर्तुल इव वर्तते। अस्या उभयपार्श्वे ध्रुवीयप्रदेशा किञ्चिन्नम्राः सन्ति।[२] रवेर्भ्रमणं विषुवतीय प्रदेशेष्वेव न भवति अपितु क्रान्तिमानेनान्तरिता रवेः कक्षा भवति। अतः सूर्याकर्षणेन पाते गतिरायाति। अस्माद्धेतोः सम्पातस्य चक्रभ्रमणमेव युक्तियुक्तमिति। वस्तुतोऽस्यायनस्य विवादः सप्तविंशत्यंशानन्तरमेवोपरतं भविष्यति। आधुनिकाः प्राचीनाश्च सर्वे विवदमाना एव सन्ति। केवलं सौरमतमेव स्वकीयाभिमतं सुस्पष्टमुद्घोषितावान्। इदानी आधुनिकेष्वपि इयं धारणा समुद्भवति यत् कदाचित् सम्पातयोः दोलाभ्रमः अपि सम्भवितुमर्हति। अतोऽस्य निर्णयः कालाधीन एव।



---

१. भारतीय ज्योतिष पृ. ४४२

२. Spherical Astronomy p. 119

# ज्यौतिषे ज्ञानमीमांसा

ज्योतिषशास्त्रे सृष्टिविवेचनप्रसङ्गे प्रायशः सांख्यसिद्धान्तानां क्वचिद् वेदान्तप्रक्रियायाश्च व्यवहारो दृश्यते। सूर्यसिद्धान्ते सांख्यवेदान्तयोर्युगपदेवोपस्थापनं विद्यते। तत्रोक्तं भगवता सूर्येण सृष्ट्युत्पत्तिप्रसङ्गे—

**वासुदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः।**
**अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः।।**
**प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः**
**संकर्षणोऽपः सृष्ट्वादौ तासु वीर्यमवासृजत्।।**

इत्यादयः (सू. सि. भूगोलाध्यायः)

परं भास्काराचार्यः स्पष्टरूपेण सांख्यमतमनुसृत्य सृष्ट्युत्पत्तिक्रमं प्रतिपादितवान्। तद्यथा—

**यस्मात् क्षुब्धप्रकृतिपुरुषाभ्यां महानस्य गर्भे-**
**ऽहंकारोऽभूत् खकशिखिजलोर्व्यस्ततः संहतेश्च।**
**ब्रह्माण्डं यज्जठरगमहीपृष्ठनिष्ठाद्विरञ्चे-**
**र्विश्वं शश्वज्ज्नयति परमं ब्रह्म तत् तत्त्वमाद्यम्।।**

(सिद्धान्तशिरोमणिः गो. अ.)

अतः कश्चन एक एव सम्प्रदायोऽत्र नास्ति। अस्मात् कारणात् ज्यौतिषशास्त्रे 'ज्ञानस्य' निरूपणं कस्यचिदिकेस्य सम्प्रदायस्यानुकारी नास्ति। परं दार्शनिकैः प्रतिपादितं प्रमाख्यमप्रमाख्यञ्च द्विविधं ज्ञानं ज्यौतिषशास्त्रेऽपि स्वीकृतं विद्यते। 'प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र साक्षिणौ' इत्युक्त्या सह सर्वे सुपरिचिता एव परं चाक्षुषप्रत्यक्षमपि प्रमात्मकं न भवितुमर्हति। यतो हि शास्त्रेऽस्मिन् प्रत्यक्षरूपेण सुस्पष्टं दृश्यमानमपि पदार्थं भ्रमात्मकं भवितुमर्हति इति मान्यता वर्तते। निरभ्राकाशे स्वनग्नचक्षुषाऽवलोकनेन स्फुटं प्रतीयते यत्

सर्वे ग्रहनक्षत्रतारका एकस्मिन्नेव तले स्थिताः सन्ति। परं वस्तुत एवं स्थितिर्नास्ति। ते परस्परमूर्ध्वोर्ध्वं स्थिता सन्ति। एकस्मात् पिण्डादपरपिण्डं यावल्लक्षशो मीलात्मकान्यन्तराणि भवन्ति। यथा चित्रद्वारा प्रदर्श्यते—




रेखात्मकं दृश्यं क्षितिजम्। विभिन्नस्थाने स्थिता ग्रहनक्षत्रतारका एकस्यामेव रेखायां (एकस्मिन्नेव तले) दृश्यन्ते। अतोऽत्र प्रत्यक्षविरुद्धं प्रमाख्यं ज्ञानं वर्तते। यद्यप्येकस्मिन्नेव तले तारकाणां दर्शनं भ्रमात्मकं परं अयं भ्रमोऽपि विज्ञानसम्मतं सिद्धान्तसम्मतं वा भवति। ऊर्ध्वोर्ध्वस्थितेषु पिण्डेषु मध्यवर्ति-अन्तरं भूस्थो द्रष्टा दूरस्थो वा द्रष्टा कथमपि द्रष्टुं न शक्नोति न केवलं ऊर्ध्वस्थितेषु पिण्डेषु एतादृशी स्थितिर्भवति अपितु भुवस्तलोपरि स्थिताः दूरस्थाः वृक्षततयः परस्परं दूरस्थिताः सत्यपि एकस्यामेव रेखायां दृश्यन्ते। अत्र कारणं यत् दूरत्वात् पिण्डगतं वृक्षादिषु च स्थितं पारस्परिकमन्तरमदृश्यो भवति। यदि कश्चन द्रष्टा दूरस्थानं एकसूत्रगतान् पिण्डान् वृक्षादींश्चावलोकयति तदा स सर्वेषां दर्शनं न करोति केवलं सम्मुखस्थं पिण्डं वृक्षं वावलोकयति अन्ये सर्वे सम्मुखस्थस्य पदार्थस्य पृष्ठे तिरोहिता भवन्ति। अयमेव सिद्धान्तः ग्रहणादीनामुत्पादको भवति। यथोक्तं गणेशदैवज्ञेन 'छादयत्यर्कमिन्दुर्विधुं भूमिभा' अर्थात् अर्कं सूर्यं इन्दुश्छादयति सूर्यग्रहणे एवमेव विधुं चन्द्रमसं भूमिभा भूमेश्छाया आच्छादयति। कथमिति चित्रद्वारा प्रदर्श्यते—



अत्र सूर्येणोत्पादिता भूमेश्छाया सूर्यादपरपार्श्वे पतति। चन्द्रः भूमिं परितो भ्रमन् यदा भूमेश्छायायां प्रविशति तथा अदृश्यो भवति स्वयं प्रकाशकत्वाभावात्। इदमेव चन्द्रग्रहणम्। एवमेव सूर्यग्रहणम्—




सूर्यग्रहणे कदाचित् सूर्यविम्बं पूर्णरूपेण कदाचिच्चांशिकरूपेण ग्रहणग्रस्तो कृष्णवर्णात्मको वा भवति। परमत्रापि प्रत्यक्षविरुद्धमेव। सूर्यः आग्नेयपिण्डः तेजोमयः भूमिश्चन्द्रो वा स्वयं प्रकाशहीनः। प्रकाशपुञ्जः कथं छायया आच्छादितो भवितुमर्हति। वस्तुतः सूर्यग्रहणे सूर्यविम्बं नाच्छादितो भवति न च सूर्यप्रकाशे म्लानता एव समायति। अपि तु द्रष्टासूर्ययोर्मध्ये चन्द्रः अवरोधकत्वेन तिष्ठति। यथोक्तं सांख्यकारिकायाम् —

**'अतिदूरात् सामीप्यादिन्द्रियघातात् मनोनवस्थात् व्यवधानादभिभवाच्च**

अत्रापि सूर्यग्रहणे व्यवधान एव कारणम् । द्रष्टासूर्ययोर्मध्ये चन्द्रः व्यवधानरूपेण स्थितो भवति अतश्चन्द्रस्य पृष्ठवर्ती कृष्णवर्णात्मको भागः सूर्यबिम्बस्य स्थाने ऽस्माभिर्दृश्यते। अर्थात् सूर्यग्रहणेऽपि चन्द्रस्यैव कृष्णो भागः न तु सूर्यस्य। इदमपि प्रत्यक्षविरुद्धं दृश्यं अस्माभिः प्रत्यब्दमवलोक्यते। एवं बहून्युदाहरणानि सन्ति यत्रावास्तविकं स्वरूपं किञ्चिदन्यं दृश्यं भवति वास्तविकं च तस्माद्भिन्नं भवति। चन्द्रस्याह्लादकत्वं रमणीयता च सुप्रसिद्धा एव। कवीनां कल्पनाकेन्द्रं सुन्दरीणां वदनस्योपमानं चन्द्र एव परं भौतिक-शास्त्रज्ञाश्चन्द्रमुखी तामेव स्वीकुर्वन्ति यस्या मुखे शीतलाप्रकोपात् गर्तततयो भवन्ति। यतो हि चन्द्रस्य तलं गर्तैः समाकीर्णं विद्यते। अतोऽयमेवाशयो यत् प्रत्यक्षमपि भ्रमात्मकं भवति।

ज्यौतिषशास्त्रं सांख्यमतं प्रायः स्वीकरोति। यथोक्तं सांख्यशास्त्रे 'प्रमेय-सिद्धिः प्रमाणात्', गणितेऽपि प्रमाणादेव प्रमेयसिद्धिर्भवति। अत्र गणितेऽपि, व्यक्ताव्यक्तज्ञातानां त्रिविधानां प्रमाणानां प्रयोगो भवति। व्यक्तमव्यक्तञ्च द्विविधं गणितं वर्तते। गणिते केचन सिद्धान्ताः स्वयं सिद्धाः भवन्ति तेषां कृते

प्रमाणस्यावश्यकता न भवति। यथा एकेन पदार्थेन यावन्तः पदार्थाः समानास्ते सर्वेऽपि परस्परं समाना एव भवति।

यथा अ —— ब

1. क —— ख

2. ग —— घ

3. च —— छ

यदि अ ब = क ख, अब = ग घ, अब = च छ

तदा अब = कख = गघ = चछ

अपरञ्च अतुल्यपदार्थेभ्यस्तुल्यविशोधनेनातुल्यता तथैव तिष्ठति। यथा—

| **अतुल्यसंख्या** | **तुल्यसंख्या** | **शेषः** | **अन्तरम्** |
|---|---|---|---|
| २५ — | १० = | १५ | ? |
| ३० — | १० = | २० | ५ |
| ३५ — | १० = | २५ | ५ |

अतुल्यसख्यासु परस्परं ५-५ अंकानामन्तरमासीत् तुल्यविशोधनेनापि तथैव ५-५ अंकानामेवान्तरमवशिष्टम्। अत्र प्रमाणस्यावश्यकता न भवति।

यदि द्वयोःरेखयोर्योगः एकस्मिन्नेव बिन्दौ भवति तदा तयोरुत्पन्नयोः कोणयोर्योगः समकोणद्वयात्मको भवति। अयं प्रमेयः। अत्र प्रमाणद्वारा एवं सिद्धिः। यथा—




अ व, स द रेखयोर्योगः द विन्दौ अतः ? अ द स + स द व = २ समकोणः = १८०°

कथमिति कर्त्तव्यता— द विन्दुत: एको लम्बो विधेय:। अयं व्यक्त:। लम्बस्योभयपार्श्वगतयो: कोणयोर्योग: = २ समकोण:।

अतस्तत्र स्थितानां लम्बस्योभय पार्श्वगतानां समस्त कोणखण्डानां योगोऽपि समकोणद्वयात्मक एव इति सिद्धम्।

एवमेव अङ्कगणिते बीजगणिते च व्यक्ताऽव्यक्तयो: साहचर्येण इष्टस्य ज्ञानं भवति। यथा अतीव प्रसिद्ध: प्रश्न:—

**अलिकुलदलमूलं मालतीं यातमष्टौ-**
**निखिलनवमभागाश्चालिनी भृङ्गमेकम्।**
**निशि परिमललुब्धं पद्ममध्ये निरुद्धं**
**प्रतिरणति रणन्तं ब्रूहि कान्तेऽलिसंख्याम्।।**

१. $\frac{\sqrt{\text{अलिकुलम्}}}{२}$

२. $\frac{\text{अलिकुलम्} \times ८}{९}$

३. एका भ्रमरी = पद्ममध्ये (व्यक्ता अदृश्या)

४. एक: भ्रमर: = पद्मोपरि (व्यक्त: दृश्य:)

गणितीय परिभाषायाम्

१. मूलगुणक: $\frac{१}{२}$

२. भाग: $\frac{८}{९}$

३. अदृश्य: १

४. दृश्य: १

समाधानसूत्रानुसारमत्र इष्टराशेरर्धस्यैव ज्ञानं भविष्यति यतो हि राशेरर्धमूलमेवात्र मूलगुणक:। अत:—

$$१ - \frac{८}{९} = \frac{९-८}{९} = \frac{१}{९}$$

$$१ \div \frac{१}{९} = \frac{९\times१}{१} = ९$$ दृश्य नूतन:

$$\frac{१}{२} \div \frac{१}{९} = \frac{१}{२} \times \frac{९}{१} = \frac{९}{२}$$ मूलगुणक:

$$\frac{९}{२} \times \frac{१}{२} = \frac{९}{४}$$ गुणार्धम्

$$९ + \left(\frac{९}{४}\right)^२ = ९ + \frac{८१}{१६} = \frac{१४४+८१}{१६} = \frac{२२५}{१६}$$

$$\sqrt{\frac{२२५}{१६}} = \frac{१५}{४} \mid \frac{१५}{४} + \frac{९}{४} \quad \frac{२४}{४} = ६$$

$(६)^२ \times २ = ३६ \times २ = ७२$ भ्रमरसंख्या।

अत्र क्रियया इष्टसिद्धि:। एवं व्यक्ताव्यक्तयो: सर्वत्र प्रमेयसिद्धि: प्रमाणादेव।

अत्रायमेवाशयो यत् ज्यौतिषशास्त्रेऽपि पदे-पदे प्रमाणानामावश्यकता भवति। प्रमाणात् सिद्धमेव ज्ञानं प्रमाख्यं भवति केवलं प्रत्यक्षागतं न। होरास्कन्धे यद्यपि सिद्धान्तरीत्या उपपत्तिजनकं प्रमाणं नोपलम्यते परं तत्रार्षप्रमाणमेव दैवज्ञैरङ्गीकृतम्। परं तत्राप्याचार्यैरुक्तं यत् 'अत्रोपलब्धिरेव वासना'। अर्थात् होराशास्त्रे यत् किमपि प्रतिपादितं तस्य परिणामस्य प्रत्यक्षीकरणमेवोपपत्ति:। अस्मादेवास्य शास्त्रस्य प्रत्यक्षत्वमपि सिद्ध्यति।



# प्राचीनसंस्कृतादर्शग्रन्थेषु प्रयुक्तालिपयः

कस्यापि देशस्य सम्प्रदायस्य वा संस्कृतेर्जीवनं संरक्षणञ्च तस्य सहित्यसंरक्षणेनैव सम्भवति। साहित्यस्य संरक्षणं लिप्या माध्यमेनैव सम्भवति। स्वकीयं पुरातनमैतिह्यमपि लिप्या माध्यमेन ज्ञातुं शक्यते। आसीत् पुरा श्रुतेः परम्परा अस्माकं भारते वर्षे यथा परम्परया श्रुतयः अद्यावधि सुरक्षिताःसन्ति, परमन्यत्र कुत्रापि सुपुष्टा सुसमीचीना च परम्परा आसीदिति आस्माभिर्न श्रुतम्। नूनं हि ते भारतीया वैदिका विद्वान्सः समादरणीयाः येषां श्रमेणाविच्छिन्ना निर्दुष्टा वेदपारायणपरम्परा अद्यापि जीयमाना प्रचलति। परन्तु वेदातिरिक्ताः वेदाङ्गादयो विभागाः लिपिमाध्यमेनैवास्माकं समक्षमायान्ति। इदानीं वयं सर्वे लिपिमाध्यमेनैव स्वकीयान् विचारान् स्थानान्तरं जनान्तरञ्च सम्प्रेषयितु क्षमा भवेम। भाषा माध्यमेनास्माकं समक्षं समुपस्थिता जना एवास्माकमाशयेनावगता भवितुमर्हन्ति नान्येऽतः भाषा ज्ञानेन सह लिपेर्ज्ञानमत्यावश्यकं भवति।

लिपेराविष्कारः सर्वप्रथमं कुत्र कदा चाभवत् इति वक्तुं न पारयामि, यतो हि भृशं विवादास्पदमिदं वर्तते। पुरातत्वविदां इतिहासविदाञ्च पारस्परिकं मतैक्यमस्मिन् विषये नास्ति। परमिदं निर्विवादं यत् अद्यावधि लब्धेषु शिलालेखेषु प्राप्तानां लिपीनामवलोकनेन सुस्पष्टं जातं यत् भारते सर्वप्राचीना ब्राह्मी लिपिरासीत्। केषाञ्चन भारतीयविदुषां मतमस्ति यद् ब्राह्मी लिपिः भारतीयानामाविष्काररूपा वर्तते। सर्वप्रथममियं लिपिरत्र व्यवहृता अत इयं ब्रह्मणा निर्मिता लिपिरिति कथ्यते। परं पाश्चात्या विद्वान्सः इदं न स्वीकुर्वन्ति। तेषु केषाञ्चन् मतमस्ति यत् ब्राह्मी लिपिः सर्वप्रचीना नास्ति। पाश्चात्यदेशीयः विश्रुतसंस्कृतज्ञः मैक्समूलरः कथयति यत् पाणिनीयपरिभाषायां लिपेः संकेतो नास्ति। अतस्तेषामनन्तरमेव लिपेः प्रसारो भारतेऽभवत्। बर्नेलमहोदयनां मतमस्ति यत् फिनिशिअन् जना एव लिपेराद्या आविष्कारकाः आसन्। तेषां साहचर्येण भारतीया ब्राह्मीलिपिः समुत्पन्ना। एवमेव बूलर महोदयानां मतमस्ति

यत् 'सेमेटिक' अक्षरैर्ब्राह्मीलिपिः समुत्पन्ना वर्तते। परन्तु सेमेटिक अक्षराणां फिनिशिअन् अक्षराणाञ्चावलोकनेन एतत् सर्वं पश्चात्यानां कथनमसङ्गतं प्रतिभाति। 'फिनिशिअन' अक्षराणां स्वल्पमपि साम्यं ब्राह्मीअक्षरैः सह नास्ति। उदाहरणार्थं 'कानिचिदक्षराणि प्रदर्श्यन्ते'—

फिनिशअन खरोष्ठी ब्राह्मी

अनेनेदं स्फुटं प्रतिभाति यद् ब्राह्मी स्वतन्त्रा लिपिर्वर्तते। अस्य जनको जननी वा न काप्यन्या लिपिरिति।

निष्पक्षरूपेण एडवर्डथामस महोदयेनोक्तम् यत् ब्राह्मी लिपिर्भारतीयानां लिपिर्वर्तते। अस्या सारल्येन भारतीयानां बुद्धिकौशलं लक्ष्यते। एवमेव प्रोफेसरडासनमहोदयानामपि मतमस्ति यत् ब्राह्मीलिपेर्वैशिष्ट्यं तस्या पृथगस्तित्त्वं प्रकटयति। अतः साधिकारं वक्तुं प्रभवामि यत् सर्वाणि साक्ष्याणि अस्य स्वतन्त्रं स्वरूपमेवानुसरन्ति G. Buhler जी बुलरमहोदयेन स्वकीये Indian Paleo graphy[1] ग्रन्थे एकं मनोरञ्जकं तथ्यमुद्घाटितम् येनास्या परोक्षरूपेण पुरातनत्वं सिद्ध्यति। तेन बेरुनीमहोदयानां मतमुपस्थापयन् लिखितं यत् भारतीया हस्तलेखकलां विस्मृतवन्तः।

अनन्तरं दैवीप्रेरणया पराशरसूनुना व्यासेन पुनरियं हस्तलेखकला अन्वेषिता। अतः सुस्पष्टमिदं यद् भारते लेखनकला ततः प्रारब्धा, तदानीं कलियुगस्यारम्भकाल आसीत्। अतः अस्या कालः ३९०९ B.C. (नवोत्तर-नवशताधिकसहस्त्रत्रयवर्षाणि ईसापूर्वः) सिद्ध्यति। भवतु नाम अस्माकं दृष्ट्या

अयमेव पक्षः समीचीनतरो यत् ब्राह्मी स्वतन्त्रा भारतीया प्राचीनतमा लिपिर्वर्तेत।

स्वकीयं प्राचीनतममितिहासमपि प्राचीनतमायां लिप्यां सुरक्षितं वर्तते। कालक्रमानुसारं समुपस्थितानां व्यवधानानां प्रभावेण लिपिज्ञानपरम्परा विच्छिन्ना जाता यथा च लिपिसु कालभेदात् स्थानभेदाच्चान्तरं जातं येन लिपीनां पठने महत्काठिन्यं भवति। पूर्णज्ञानाभावात् बहूनि तथ्यानि अनुद्घाटितान्येव तिष्ठन्ति। अशोकस्तम्भस्योपरि उट्टङ्कितानि अक्षाराणि अद्यावधि समीचीनतया न पठितानि सन्ति।

संस्कृतभाषायां संग्रहीतानि शास्त्राणि न केवलं भारतीयानामपि तु वैदेशिकानां कृतेऽपि आकर्षणकेन्द्रान्यासन्। अतस्तैरपि ब्राह्मी लिप्यां सुरक्षितमुपनिबद्धञ्च शास्त्रमवलोकयितुं भृशं यत्नशीला आसन्। चतुरशीत्युत्तरसप्तदशशतमिते १७८४ ईसवीयवत्सरे सरविलियमजोन्समहोदयेनैका "एसियाटिकसोसाइटी" इत्याख्या संस्था संस्थापिता। तस्या माध्यमेन भारतीयेतिहास-शिल्प-कला-साहित्यादीनां सूक्ष्ममन्वेषणं प्रारब्धम्। प्रसङ्गेऽस्मिन् आधारभूतानां शिलालेखानां, मुद्राणां, दानपत्रादीनाञ्चान्वेषणं तेषां वाचनादिभिःसम्बन्धितं कार्यं विद्वद्भिरङ्गीकृतम्।

अस्माकं देशे प्राप्ताः प्रायशः सर्वे शिलालेखाः मौर्यवंशकालीनाः सन्ति तेष्वपि विशेषतया सम्राट् अशोकस्य शासनकालीनाः सन्ति। द्वौ शिलालेखौ अशोककालात् पुरातनौ स्तः। तयोरेकः राजस्थानप्रदेशस्याजमेरमंडलान्तर्गतबडलीग्रामात् समुपलब्धः द्वितीयश्च नेपालस्योपत्यकायां 'विप्रावा' नामकस्थानात् समुपलब्धः। अस्य कालः पुरातत्वविद्भिः ४४३ त्रिचत्वारिंशदधिकचतुःशतं ईसापूर्वं निर्धारितम्। उभयोर्लिपिः ब्राह्मी आसीत्। अशोकस्य काले प्रचलितलिप्या सह विप्रावा शिलालेखस्थायां लिप्यां किञ्चिदन्तरमासीद् येनानुमीयते यदस्या कालः ईसातः प्राक् ५०० वर्षाण्यावद् भवितुमर्हति।

ब्राह्मीं लिपिमधिकृत्य जैनग्रन्थेषु बौद्धग्रन्थेषु च विस्तरं वर्णनमुपलभ्यते। पन्नवणासूत्रे समवायांगसूत्रे च अष्टादशलिपीनामुल्लेखो वर्तते।

एवमेव ललितविस्तराख्ये बौद्धग्रन्थेऽपि चतु:षष्टिसंख्याकानां लिपीनामुल्लेखो वर्तते। भगवतीसूत्रे ब्राह्मीं लिपिं नमस्कृत्य सूत्रारम्भो कृतो वर्तते। नमो बंभीये लिवियेे। सर्वत्र लिपिगणनायां प्रथमं नाम ब्राह्मीलिपेः द्वितीयञ्च खरोष्ठी लिपेर्वर्तते। अष्टषष्ट्युत्तरषष्ट्शततमे ईसवीयवत्सरे चीनदेशे ''फा यु अन् चु लिन्'' बौद्धविश्वकोशस्य रचना जाता। तत्र ललितविस्तरोक्ता चतु:षष्ठिसंख्याका लिपिसूची निर्दिष्टा वर्तते। अद्यापि इयमेव धारणा वरीवर्ति यद् भारते प्रचलितानां सर्वासां लिपीनां जननी इयमेव ब्राह्मी लिपिरेव वर्तते। अस्यां अङ्कानामपि संकेतो वर्तते अङ्कानामाविष्कारस्तु केवलं भारतीयानामेव वर्तते इति प्रायशः सर्वे जानन्त्येव। ब्राह्मी लिप्यां अंका एकत आरभ्य ९ पर्यन्तं वर्तन्ते। अनन्तरं दशस्थानीयानामंकानां १० दशत आरभ्य ९० नवति पर्यन्तमुल्लेखः वर्तते। तत्र शतस्थानीयानां सहस्रस्थानीयानामङ्कानां कृते संख्या नास्ति तेषां व्यवहारस्तत्र संकेतेनासीत्। एवं सम्पूर्णाङ्कत्वेनास्य व्यवहारः समस्ते भारते वर्षे आसीत्। प्रथमम् औदीच्या ब्राह्मी द्वितीयञ्च दाक्षिणात्या ब्राह्मी। औदीच्यां ब्राह्मीलिप्यां प्रमुखरूपेण गुप्ता-कुटिला, नागरी, शारदा, बंगलाप्रभृतयः आसन्। उदाहरण रूपेणात्र कुटिला लिप्यां प्राप्तस्य शिलालेखस्य छायाप्रतिं प्रस्तूयते। सहैवास्य देवनागरी रूपान्तरमपि प्रदर्श्यते

**कुटिल-लिप्यां शिला-लेख**

विक्रम संवत्
५८९
ख्रीष्टाब्द
५३२

मन्दसोर, विक्रमसंवत् ५८९, ई. स. ५३२

शिलालेखस्य देवनागरीरूपान्तरम्-

अथ जयति जनेन्द्रः श्रीयशोधर्मनामा प्रमदवन- (शत्रु) मिवान्तः (१)

शत्रु सैन्यं विगाह्य व्रणकिसलयभङ्गैर्योङ्गभूषां विधत्ते तरुणत-(२)

रुलतावद्वीरकीर्तिर्व्विनाम्य आजौ जितौ विजयते जगतीम्पुनश्च (३)

श्रीविष्णुवर्द्धननराधिपतिः स एव प्रख्यात औलिकरलाञ्छन आत्म (४)

वङ्शो येनोदितोदितपदं गमितो गरीयः प्राचो नृपान् सुवृहतश्च (५)

बहूनुदीचः साम्तायुधा च वशगान्प्रविधाय येन नामापरं (६)

जगति कान्तमदो दुरापं राजाधिराजपरमेश्वर इत्युदूढम् (७)

स्निग्धश्यामाम्बुदाभैः स्थगित दिनकृतो यज्व नामाज्यधूमैरम्भो मेध्यं (८)

विस्तरभयाद् अत्र केवलं 'अ' स्वरस्य स्वरूपमुपस्थाप्यते—

| देवनागरी | ब्राह्मी | मलयालम | ग्रन्थ | तमिल | तेलुगू |
|---|---|---|---|---|---|
| अ | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] |

केषाञ्चन विदुषामतमस्ति यत् देवनागरीलिपिः कुटिलाब्राह्मीतः समुत्पन्ना। परमद्य यादृशं स्वरूपं देवनागरी लिपेः वर्तते न तस्य साम्यं कुटिलालिप्या सह दृश्यते।

एवमेव दाक्षिणात्य-ब्राह्म्यामपि अद्य प्रचलिता सर्वाः लिपयः परस्परं भिन्नाः। तत्र पारस्परिकमपि साम्यं नास्ति।

दाक्षिणात्यब्राह्म्यां कन्नड़-तेलुगु-ग्रन्थमलयालमलिपिषु समुपलब्धाः ग्रन्था तालपत्रेषु लिखिता भवन्ति। तेषां चित्रमत्र प्रस्तूयते।



तत्र प्रायश: सर्वासु लिपिसु कानिचिदक्षराणि तुल्यरूपाणि भवन्ति। तत्र पार्थक्यं दुष्करं भवति। तत्र मेधा अभ्यासश्च साहाय्यं करोति। अत्र ग्रन्थ लिप्यां एतादृश्या ये अंशा: सन्ति तेषां प्रदर्शनं मया क्रियते।

(उ) 2, (व) 21, (च) 21, (छ) 2Δ, (फ) 2Δ

अनया रीत्या अक्षरसाम्यवशात् भ्रान्तिर्भवति। परिणामत: ग्रन्थसम्पादने अवाञ्छितान्यपि पाठान्तराणि समुद्भवन्ति। एतेषां निवारणं तदा सरलतया भवति यदा अन्यलिप्यामपि हस्तलेखा: समुपलब्धा भवन्ति। स्थितावस्यां प्रत्यक्षराणां स्वर-व्यञ्जनानाञ्च पाठसंवाद: सावधानतया कर्त्तव्य:।

प्राचीनानां हस्तलेखानां लिपिज्ञानं सरलतया भवितुमर्हति। यतो हि तत्र केवलं अक्षरसंकेत: विभिन्नासु लिपिसु भवति। भाषा तु संस्कृतं प्राकृतं वा भवति।

यद्यप्येदानीं लिपिसु सुरक्षिता सामग्री प्रकाशं नीयते मुद्रणालयै: शनै: शनैस्तथापि विभिन्नासु लिपिसु अभ्यास: ग्रन्थसम्पादने शोधकर्मणि च फलदायको भवति।



# मैत्रे मुहूर्ते शशलाञ्छनेन

कुमारसम्भवे महाकविना कालिदासेन पार्वती-परमेश्वरयोर्विवाहावसरे 'मैत्र'-मुहूर्त्तस्योल्लेखः कृतः। स च मैत्राख्यो मुहूर्त्तो ज्यौतिषशास्त्रे सम्प्रत्युपलब्धेषु मुहूर्त्तग्रन्थेषु मया न कुत्राप्यवलोकितः। परं महाकविना समुद्धृतोऽयं मुहूर्तः। अतोऽयं गवेषणीयो विषयः।

मुहूर्त्तशब्दो ज्योतिषशास्त्रे द्विधा व्यवहृतो विद्यते। एकः कालखण्ड-वाचकोऽपरो भद्रादिदोषरहितः कार्यविशेषानुरूपो विहितनक्षत्रादियुतः कालः कालखण्डववाचको मुहूर्तो घटिकाद्वयात्मको भवति। अत्रापि द्विधा व्यवहारो दृश्यते। एकत्र मुहूर्त्तो 'घटिकाद्वयम्' इति सिद्धान्तेन विंशत्युत्तरशतक-कलात्मको घटिकाद्वयात्मको वा कालो मुहूर्त्त पदवाच्यो भवति। अपरत्र च दिनमानस्य रात्रिमानस्य वा पञ्चदशांशो भागो मुहूर्त्त इति। अयमस्थिरः कालः। अत्र न्यूनाधिकता भवति। यदा दिनमानस्य वृद्धिर्भवति तदा मुहूर्त्तपरिमाणेऽपि वृद्धिर्यदा च त्रिंशद् घटिकातो न्यूनं दिनमानम् तदा मुहूर्तपरिमाणेऽपि ह्रासः। अत्रापि यदा दिनमानम् त्रिंशद्घटिकात्मकं भवति तदैव घटिकाद्वयात्मको मुहूर्त्तो भवति नान्यथा। एकस्मिन् दिवसे पञ्चदश मुहूर्त्ता भवन्ति। प्रत्येकेषु मुहूर्त्तेषु एकैकं नक्षत्रं तन्नियामकत्वेन भवति। यथोक्तं मुहूर्त्तचिन्तमणौ विवाहप्रकरणे[१]—

गिरिशभुजगमित्राः पित्र्यवस्वम्बुविश्वे
ऽभिजिदथ च विधातापीन्द्र इन्द्रानलौ च।
निर्ऋतिरुदङ्नाथोऽर्य्यमाथो भगः स्युः।
क्रमश इह मुहूर्त्ता वासरे बाणचन्द्राः।।

१. मु० चि० वि० प्र० ५२।

अर्थात् दिवसे नक्षत्राधीना एते पञ्चदश मुहूर्त्ता भवन्ति। एषु मुहूर्त्तेषु निर्दिष्टनक्षत्राणां मान्यता भवति।

| मुहूर्त्ताः | नक्षत्राणि | मुहूर्त्ता | नक्षत्राणि |
|---|---|---|---|
| १ | आर्द्रा | ९ | रोहिणी |
| २ | आश्लेषा | १० | ज्येष्ठा |
| ३ | अनुराधा | ११ | विशाखा |
| ४ | मघा | १२ | मूल |
| ५ | धनिष्ठा | १३ | शतभिषा |
| ६ | पूर्वाषाढ़ा | १४ | उत्तराफल्गुनि |
| ७ | उत्तराषाढा | १५ | पूर्वाफल्गुनि |
| ८ | अभिजित् | | |

एवमेव रात्रावपि पञ्चदशमुहूर्त्ता[१] भवन्ति। तेषां नक्षत्रेणैव बोधो भवति। तद्यथा—

| मुहूर्त्ताः | नक्षत्राणि | मुहूर्त्ता | नक्षत्राणि |
|---|---|---|---|
| १ | आर्द्रा | ९ | मृगशिरा |
| २ | पूर्वाभाद्रपदा | १० | पुनर्वसु |
| ३ | उत्तराभाद्रपदा | ११ | पुष्य |
| ४ | रेवती | १२ | श्रवण |
| ५ | अश्विनी | १३ | हस्त |
| ६ | भरणी | १४ | चित्रा |
| ७ | कृत्तिका | १५ | स्वाति |
| ८ | रोहिणी | | |

१. शिवोऽजपादादष्टौ स्युर्भेशा अदितिजीवकौ।
विष्ण्वर्कत्वष्ट्रमरुतो मुहूर्त्ता निशि कीर्तिता।।
१. मु. चि. वि. प्र. ५३।

आवश्यके सति कस्मिन्नपि दिवसे विवाहार्थमेतेषामुपयोगः क्रियते। यदि मघानक्षत्रमभीष्टं चेत् तर्हि दिवसस्य चतुर्थे मुहूर्ते विवाहादिकं कार्य सम्पादयितुं शक्यते। एवं रात्रावपि। एतेषां प्रयोग आपत्काले एव भवति।

अपरेषु भद्रादिदोषरहितेषु मुहूर्तेषु प्रत्यहं तदेव नक्षत्रं भवति यस्मिन् नक्षत्रे चन्द्रस्तिष्ठति। अर्थात् तत्र दैनिकचान्द्रनक्षत्राणामेव व्यवहारो भवति। ईदृग्विविधा मुहूर्त्ताः सामान्याः सततं व्यवहारयोग्याश्च। प्रायशः लोकव्यवहारे काव्येषु पुराणेषु चैतेषां सामान्यमुहूर्त्तानामेवोल्लेखो दरीदृश्यते। क्वचिद् युद्धयात्रायाम्, क्वचित् सामान्ययात्रायाम् क्वचिद् विवाहप्रसङ्गे, क्वचिच्चाध्ययनकर्मसु मुहूर्त्तानां चर्चा वरीवर्ति। परं प्रायशस्तेषु मुहुर्त्तेषु न तथाविधा विचिकित्सा समुद्भवति यादृशी शिवपार्वत्योर्विवाहमुहूर्त्ते वर्तते। वामनपुराणे सप्तर्षयो नगाधिराजमुक्तवन्त[१]:—

ततः सप्तर्षयः प्रोचुः शैलराज निशामय।  
जामित्रगुणसंयुक्तां तिथिं पुण्यां सुमङ्गलाम्।।  
उत्तराफल्गुनीयोगं तृतीयेऽह्नि हिमांशुमान्।  
गमिष्यति च तत्रोक्तो मुहूर्त्तो मैत्रसंज्ञकः।।

अत्र चन्द्रस्य उत्तराफल्गुनियोगेन मैत्रसंज्ञको मुहूर्त्तो निर्दिष्टः। अयमेवाशयो महाकविना कालिदासेनापि प्रदर्शितः कुमारसम्भवे[२]—

मैत्रे मुहूर्त्ते शशलाञ्छनेन योगं गतासूत्तरफाल्गुनीषु।।

---

१. वामनपुराणम् २६, ६२-६३।

२. कुमारसम्भवम् ७-६।

अत्र विचारणीयोऽयं विषयो यत् को नाम मैत्रमुहूर्त्तः? 'मैत्रशब्देन ज्यौतिषशास्त्रे अनुराधा नक्षत्रस्य बोधो भवति दैवत्ववशात्। यात्राप्रसङ्गेऽपि मैत्रमुहूर्त्तस्य चर्चा दृश्यते। महाभारते एकस्मिन् प्रसङ्गे श्रीकृष्णेनादिष्टोऽर्जुनो गन्तुं सन्नद्धः। तत्र मैत्रमुहूर्त्तयोगेन यात्रामुहूर्त्तस्य वैशिष्ट्यं प्रतिपादयन् श्रीकृष्णो जगाद—

ततो व्यपेततमसि सूर्ये विमलवद्गते।
मैत्रे मुहूर्त्ते सम्प्राप्ते मृद्वर्चिषि दिवाकरे॥
कौमुदे मासि रेवत्यां शरदन्ते हिमागमे॥
स्फीतसस्यमुखे काले कल्पः सत्त्ववतां वरः[1]॥

अत्रायमाशयो यत् हे अर्जुन ! रेवत्यां मैत्रमुहूर्त्ते सम्प्राप्ते सति त्वं गच्छ। अत्रापि मैत्रमुहूर्त्तेन सह रेवतीनक्षत्रस्य कः सम्बन्धः इति विचारणीयः। आचार्यनीलकण्ठेन स्वकीये भाष्ये मैत्रमुहूर्त्तस्य संगतिरेवं प्रतिपादिता। अर्जुनस्य जन्मनक्षत्रं पूर्वाफल्गुनिः यात्रानक्षत्रञ्च रेवती। पूर्वाफाल्गुनि-जन्मनक्षत्राद् रेवतीनक्षत्रस्य संख्या सप्तदश अर्थात् तदानीं अर्जुनस्य कृते मैत्रतारा[2] उपलभ्यते। अतो मैत्र तारायोगेन रेवत्यां मैत्रमुहूर्त्तस्य सम्प्राप्तिर्जायते। युक्तिसंगतोऽयं नीलकण्ठाचार्यस्याभिप्रायः। वामनपुराणेऽपि सप्तर्षिभि-र्निधारिते मैत्रे मुहूर्त्ते उत्तराफाल्गुनिनक्षत्रे मैत्रताराया योगेन मैत्रमुहूर्त्तो भवितुमर्हति। यदि मैत्रतारायोगेन उत्तराफाल्गुनिनक्षत्रे मैत्रमुहूर्त्तः कल्प्यते तदा पार्वत्या जन्मनक्षत्रं नूनं हि मृगशीर्ष-चित्रा-धनिष्ठानक्षत्रेष्वन्यतमं भवितुमर्हति। अस्याधारेण कुमारसम्भवे प्रतिपादितस्य मैत्रे मुहुर्त्ते शशलाञ्छनेनेत्यादेर-न्वर्थता सिध्यति। ताराज्ञानं ज्योतिषशास्त्रे प्रतिपादितं वर्तते विवाहप्रसङ्गे। कन्यर्क्षात् वरभं यावत् वरभात् कन्यर्क्ष यावत् या नक्षत्रसंख्या तत्संख्याका तारा भवति। यदि संख्या नवभिरधिका तदा नवभिर्विभज्य शेषाङ्केन तारा ज्ञेया[3]। अनयैव रीत्या यत्र ताराज्ञानमपेक्षते तत्र जन्मनक्षत्राद् वर्तमाननक्षत्रं

१. महाभारत उ. प. ८३, ६-७।

२. जन्माख्यसम्पद् विपदःक्षेमप्रत्यरिसाधकाः वधमैत्रातिमैत्राः स्युस्तारा नामसदृक्फला (मु. पि. ४.१२)

३. कन्यर्क्षाद्वरभं भावत् कन्याभं वरभादपि।
गणयेन्नवहृच्छेषे त्रीष्वद्रिभमसत्स्मृतम्॥ मु. चि. ६.२४

यावत् विगणय्य नवभिर्विभज्य च ताराज्ञानं क्रियते।

वामनपुराणोक्ते मुहूर्ते मैत्रमुहूर्त्तादतिरिक्तमन्यदपि वैशिष्ट्यं प्रतिपादितं वर्तते। तच्चैवम् जामित्रगुणसंयुक्तामिति जामित्रं नाम सप्तमम्। कन्यालग्नात् सप्तमः पत्युः भावः वरस्य लग्नात् सप्तमं पत्न्याः स्थानं भवति। अतः अस्य भावस्य शुद्धिर्विवाहलग्ने विशेषेणावलोक्यते। विवाहलग्नात् सप्तमे भवने ग्रहस्थितिवशाद् जामित्रदोषो भवति। ग्रहरहितो भावो जामित्रगुणसम्पन्नो भवति। यथोक्तं मुहूर्त्तचिन्तामणौ—

लग्नाच्चन्द्रान्मदनभवनगे खेटे न स्यादिह परिणयनम्।
किं वा बाणाशुगमितलवगे जामित्रं स्यादशुभकरमिदम्[१]॥

अतो निष्कर्षरूपेणायं वक्तुं प्रभवामि यन्नायं कश्चन सामान्यो मुहूर्त्तः अपि त्वयं यौगिको मुहूर्त्तः। मैत्रतारायोगेनायं मैत्रो मुहूर्त्तः। अत्रायमपि भवितुमर्हति यत् पूर्वोक्तेषु पञ्चदशमुहूर्त्तेष्वपि मैत्राख्यो मुहूर्त्तो वर्तते योऽनुराधानक्षत्रस्य बोधको वर्तते। अयं प्रत्यहं दिवसे तृतीये मुहूर्त्ते समायाति। अतो दिवसस्य तृतीये मुहूर्त्ते उत्तराफाल्गुनियोगेन मैत्रमुहूर्त्तस्य सम्प्राप्तिर्भवितुमर्हति।

परमाचार्यनीलकण्ठस्य मतं मैत्रतारायोगेन मैत्रमुहूर्तस्य सम्प्राप्तिरिति समीचीनः पक्षः। अतः मैत्रे मुहूर्त्ते शशलाञ्छनेन, योगं गतासूत्तरफाल्गुनीषु इत्यत्र उत्तराफाल्गुनिनक्षत्रे मैत्रताराया योगेन मैत्रमुहूर्त्तस्य सम्प्राप्तिरिति सिध्यति।



१. मु. चि. ६.६७।

# ज्यौतिषे ग्रहणविमर्शः

ग्रहणं नाम तमसा बिम्बेन वा कस्यचिद्बिम्बस्याच्छादनम्। गृह्णातीति ग्रहणम् इति व्युत्पत्या छादकश्छाद्यं गृह्णाति ग्रसति। यद्यपि ग्रहणपदेन केवलं सूर्यग्रहणं चन्द्रग्रहणञ्च गृह्यते परं अन्येषामपि ग्रहपिण्डानां ग्रहणं भवति किन्तु स्वनग्नचक्षुषा तेषां ग्रहणानां प्रत्यक्षीकरणमस्माभिर्न क्रियते। तेषां पिण्डानां छाद्यछादकानाञ्चाति दूरत्वात् । ग्रहणं कथं भवति? तत्र को हेतुः? इति जिज्ञासायां गणितज्ञशिरोमणिः श्रीगणेशदैवज्ञो वक्तिः— ''छादयत्यर्क-मिन्दुर्विधुं भूमिभा'' (ग्रहलाघवः) अर्थात् सूर्यग्रहणे सूर्यविम्बं इन्दुश्चन्द्रः आच्छादयति चन्द्रग्रहणे च भूमिभा भूमेश्छाया चन्द्रविम्बमाच्छादयति। इयं स्थितिर्यस्मिन् कस्मिन्नापि काले भवितुनार्हति अपि तु नियतेनैव कालेन नियतायां तिथावेव सम्भवति। सा च तिथिः पूर्णिमामा च विद्यते। चन्द्रग्रहणं पूर्णिमायाम् सूर्यग्रहणञ्चामायां भवति। अत्र हेतुर्वर्तते यत् सूर्यः भूमिं परितो भ्रमन् यदा भूमेरेकपार्श्वे भवति तथा च चन्द्रो भूमिं परिक्रम्यापरपार्श्वं समायाति तदा सूर्याचन्द्रमसोर्मध्ये अशीत्युत्तरशतांशात्मकमन्तर भवति। एतादृशी स्थितिर्पूर्णिमायामेव सम्भवति।'परिणामतः त्रयाणां सूर्य-भू-चन्द्राणां एकसूत्रे स्थितिवशात् सूर्यकिरणैरुत्पादिता भूमेश्छया चन्द्रकक्षायां स्थितस्य चन्द्र-विम्बस्योपरि पतति। भूच्छायायां प्रविष्टश्चन्द्रोऽदृश्यो भवति। इदमेव चन्द्र-ग्रहणम् । यदा स्वल्पमेव विम्बं भूच्छायायां प्रविशति तदा खण्डग्रहणं यदा समग्रं विम्बं ग्रस्तं भवति तदा खग्रासग्रहणं जायते। चन्द्रविम्बेन सह खस्याकाशस्यापि केचन अंशा आच्छादिता भवन्ति। अतोऽस्य खग्रास इति अन्वर्थं नाम। विदितचरमिदं यत् चन्द्रविम्बं सूर्यप्रभया प्रकाशितो भवति। अतः कृष्णवर्णायां मूच्छायायां प्रविष्टश्चन्द्रोऽदृश्यो भवति। एतेन चन्द्रग्रहणं सर्वत्र समानरूपेण दृश्यते। स्थानभेदेन ग्रहणस्वरूपे किमप्यन्तरं न जायते। परं सूर्यग्रहणे स्थितिर्भिन्ना भवति। सूर्यग्रहणं स्थानभेदेन भिन्नं-भिन्नं दृश्यते। तत्रायमेव हेतुर्यत् सूर्यग्रहणे सूर्याचन्द्रमसोः स्थितिरेकस्यामेव दिशि भवति। सूर्यः स्वयं प्रभा सम्पन्नः। चन्द्रश्च स्वयं प्रभाहीनः। अतश्चन्द्रपिण्डस्य सूर्याभिमुखो भागः प्रकाशितो भवति, अपरपार्श्वश्चाप्रकाशितः कृष्णवर्णात्मको

भूत्वाऽदृश्यो भवति। अस्मादेव कारणादमायां चन्द्रो न दृश्यते। सर्वोपरि सूर्यस्तस्याधश्चन्द्रस्ततो पृथ्वी अमायां भवति। एवं भूस्थो द्रष्टा चन्द्रस्य कृष्णाविम्बेनाच्छादितं सूर्यमण्डलमवलोकयति। सूर्यमण्डलस्य महत्वात् चन्द्रमण्डलस्य लघुत्वाद् यदा त्रयाणां स्थिति भूगर्भसूत्रे भवति तदा सूर्यस्य कङ्कणग्रहणं जायते। मध्ये कृष्णवर्णः परिधिगतश्च प्रकाशः। एवमेव भूपृष्ठोपरि यत्र चन्द्रविम्बमवरोधकत्वेन न भवति तत्र स्वल्पमपि ग्रहणं न दृश्यते। अतः स्थानभेदात् एककालावच्छेदेन सूर्यग्रहणं खग्रासः खण्डग्रासश्च दृश्यते। एवं चित्रागतिः सूर्यग्रहणस्य। अत्र सैद्धान्तिकमपि कारणं उपस्थाप्यते मया। चन्द्रग्रहणे छादिका भूमा छादकश्चन्द्रश्च एकस्यामेवकक्षायामुभौ स्थितौ भवतः। परमत्र सूर्यग्रहणे छादकश्चन्द्रश्चन्द्रविमण्डले छाद्यः सूर्यश्च क्रान्तिमण्डले स्थितो भवति। एवं भिन्न-भिन्न कक्षायां स्थितौ रवीन्दू गर्भाभिप्रायेण एकस्मिन्नेव सूत्रे स्थितावपि भूपृष्ठाभिप्रायेण किञ्चिदन्तरितं दृश्येते। इदमन्तरं लम्बनसंज्ञकं भवति। खमध्ये चास्याभावो क्षितिजे तु परमत्वं भवति। एवमेव याम्योत्तर-मन्तरबोधिका नतिरपि भवति। अनयोर्नतिलम्बनयोः सकाशात् सूर्यग्रहणे स्थानभेदादन्तरं दृश्यते। उक्तञ्चात्र श्रीमताभास्कराचार्येण[१]—

पर्वान्तेऽर्कं नतमुडुपतिच्छन्नमेव प्रपश्येत्।
भूमध्यस्थो न तु वसुमतीपृष्ठनिष्ठस्तदानीम्।
तद्दृकसूत्राद्धिमरुचिरधो लम्बितोऽर्कग्रहेऽतः
कक्षाभेदाहि खलु नतिर्लम्बनं चोपपन्नम्।।
समकलकाले भूभा लगति मृगाङ्के यतस्तया म्लानम्।
सर्वे पश्यन्ति समं समकक्षत्वान्न लम्बनावनती।।

ग्रहणमुद्दिश्यात्रायं प्रश्नः समुदेति यत् कथन्न प्रतिपूर्णिमायाममायाञ्च सूर्याचन्द्रमसोर्ग्रहणं जायते। प्रतिपूर्णिमायाममायाञ्च ग्रहणं न सम्भवति यतो हि रविकक्षातोभूकक्षा पञ्चांशं यावन्नम्रा वर्तते। अतः कदाचिद् भूमेश्छाया चन्द्रपिण्डात् चन्द्रविमण्डलाच्चोपरिष्ठादधस्ताद्वा गच्छति। येन मूच्छायायां

१. सि. शि.

चन्द्रः प्रविष्टो न भवति। यदा चन्द्रविमण्डलस्य धरातले भूच्छाया भ्रमति तदैव चन्द्रग्रहणं सम्भवति। सैद्धान्तिकपरिभाषया यदा शरस्याल्पत्वं भवति तदा एव ग्रहणम्। ग्रहणसम्भवासम्भवकालज्ञानार्थं ज्यौतिर्विद्भिरुक्तम्—

''एवं पर्वान्ते विराह्वर्कबाहोरिन्द्राल्पांशाश्चेद् सम्भवो ग्रहस्य''।

अर्थात् पूर्णान्ते राहुरहितस्य सूर्यस्य भुजांशाः यदि चर्तुदश अंशादल्पाश्चेत्तदा ग्रहणस्य सम्भवो नान्यथा। सूर्यसिद्धान्तेऽप्ययमेव सिद्धान्तः प्रतिपादितो वर्तते—

''भानोर्भार्धे महीच्छाया तत्तुल्येऽर्क समेऽपि वा।

शशाङ्कपाते ग्रहणं कियद् भागाधिकोनके।।''

अर्थात् सूर्यस्य राशिषट्कान्तरे भूच्छाया भ्रमति। शशाङ्कपाते तत्तुल्ये वा रविसमे वा कियद् भागाधिकोनके ग्रहणस्य सम्भवो भवति। अत्र कियद् भागाधिकोनके इत्यस्याभिप्रायश्चतुर्दशांशादल्पे सति ग्रहणस्य सम्भव इति। अत्र शशाङ्कपातो नाम राहुः। क्रान्तिवृत्तचन्द्रविमण्डलयोः सम्पातौ राहुकेतू संज्ञकौ वर्तेते। श्रीमता भास्कराचार्येणोक्तम् यत् —

''राहुः कुभामण्डलगः शशाङ्कं

शशाङ्कगश्छादयतीनविम्बम् ।

तमोमयः शम्भुवरप्रदानात्

सर्वागमानामविरुद्धमेतत् ।।

अत्र राहुर्नाम भूमेश्छाया। राहुः कश्चन दैत्यः यः शम्भुवरप्रदानात् तमोमयः सञ्जातः। अन्यैरपि दैवज्ञैः अस्य संकेतः कृतः—

अमृतास्वादविशेषाच्छिन्नमपिः शिरः किलासुरस्येदम् ।

प्राणैरपरित्यक्तं ग्रहतां यातं वदन्त्येके ।।

अमुमेवाशयमङ्गीकृत्य पुराणेषु कथानकमिदं दरीदृश्यते यत् राहुर्नामदैत्यश्चन्द्रं सूर्यञ्च काले-काले ग्रसति। अत्र राहुकृतो ग्रासः सुसंगतः सिद्धान्त-

सम्मतश्च वर्तते। पुराणेषु वर्णिताः बहवः कथानकाः ज्यौतिषसिद्धान्तसम्माताः सन्ति। पुरा यदा ज्यौतिषसिद्धान्तः पूर्णरूपेण परिष्कृतो नासीत् तदानीमपि ग्रहणगणिते आचार्याः पूर्णसक्षमा आसन्। वेदाङ्गज्यौतिषे ग्रहणचक्रनामकं ग्रहणसाधनविधानं वर्तते। तत्रोक्तं यत् ग्रहणानांमष्टादशवर्षात्मकं चक्रं भवति। अत्रिगोत्रीया ब्राह्मणा अस्य गणितस्य ज्ञातारःकर्त्तारश्चासन्। तदानीं ग्रहण-गणितस्यातीव सरला सरणिरासीत् । राहुपातस्य स्फुटपरिभ्रमणकालमाश्रित्य ग्रहणचक्रस्य कल्पना कृता वर्तते। एकग्रहणकालादष्टादशवर्षानन्तरं पुनः-तादृशमेव ग्रहणं समागमिष्यति। अर्थात् सर्वेषां ग्रहणानां पुनरावृत्तिः अष्टादश-वर्षाणामेकादशदिवसानाञ्चानन्तरं भवति। अस्मादेव सिद्धान्तात् पूर्वाचार्यैः ग्रहणज्ञानं कुर्वन्तिस्म। महाभारतकालं यावत् इयं परम्परा आसीत्। महाभारते त्रयोदशदिवसात्मकस्य पक्षस्य एकस्मिन् मासे ग्रहणद्वयस्यापि चर्चा वर्तते। यदा मासे ग्रहणद्वयं दिनसंख्या च अल्पीयसी भवति तदानीं विश्वोद्वेगकर-मुत्पातं भवति। महाभारतयुद्धकालात् प्रागियं स्थितिरासीत्। उक्तञ्च महाभारते—

चतुर्दशीं पञ्चदशीं भूतपूर्वां तु षोडशीम्।
इमां तु नाभिजानेऽहममावस्यां त्रयोदशीम्।
सूर्यचन्द्रावुभौ ग्रस्तौ एकमासीं त्रयोदशीम्
अपर्वणि ग्रहावेतावुत्पातं जनयिष्यतः।।

एकस्मिन् मासे ग्रहणद्वयस्य स्थितिः उत्पातसूचिका भवति एवमेव पक्षः त्रयोदशदिवसात्मकोऽपि अशुभसूचकः। द्वयोर्निमित्तयोर्युगपदेव स्थितिः विश्वस्य क्षयङ्करी जाता।

संहितासु प्रतिपादितानामुत्पातानां प्रभावः सर्वत्र दरीदृश्यते। ग्रहणानां प्रभावः द्विधा वर्णितो वर्तते। तत्रैकः व्यक्तिपरको द्वितीयश्च राष्ट्रपरकः। व्यक्तिपरकः शुभाशुभः ग्रहणकालिकनक्षत्रवशाद् भवति। यस्मिन् नक्षत्रे ग्रहणं भवति तस्मिन् नक्षत्रे जातानां कृते हानिर्मृत्युर्तुल्यं कष्टं वा भवति। एवमेवान्य-राशीषु जातानां कृते भिन्नं-भिन्नं फलं भवति। तद्यथा—

ग्रहणराशित आरम्भ क्रमेण घातः क्षतिः, श्रीः, व्यथा, चिन्ता, सौख्यम्, कलत्रदौस्थ्यम्, मृत्युः, माननाशा, लाभः, हानिश्च भवति।

उक्तञ्च मुहूर्त्तचिन्तामणौ—

जन्मर्क्षे निधनं ग्रहे जनिभतो घातः क्षतिः श्रीर्व्यथा।

चिन्ता-सौख्य-कलत्रदौस्थ्यमृतयः स्युर्माननाशःसुखम्।

लाभोपाय इति क्रमात्तदशुभध्वस्त्यै जपः स्वर्णगो-

दानं शान्तिरथो ग्रहं त्वशुभदं नो वीक्ष्यमाहुः परे।

भारतीयानां दैवज्ञानामृषीणाञ्च मतमासीत् यत् ग्रहणकाले वातावरणं भिन्नं भवति। स चाध्यात्मिकः कालः अतः ग्रहणकालात् प्राक् ग्रहणकाले चाशनं पानं तैर्निषिद्धम्। तत्रोक्तम् धर्मशास्त्रकारैः —

सूर्यग्रहे तु नाश्नीयात् पूर्वं यामचतुष्टयम्।

चन्द्रग्रहे तु यामाँस्त्रीन् बालवृद्धातुरैर्विना॥

ग्रहणकालिकीं कर्त्तव्यतां निरूपयन् स्मृतिकारा कथयन्ति—

स्नानं स्यादुपरागादौ मध्ये होमसुरार्चने।
सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्वाणस्तु नास्तिक्यात् पङ्के गौरिव सीदति
स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने।
सन्ध्या रात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः
द्वयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्।
उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ
चन्द्रसूर्योपरागे च प्राजापत्येन तत् समम्॥

आधुनिकैरपि शनैः शनैः ग्रहणजन्यं दुष्परिणामं स्वीकुर्वन्ति। इदानीं वैज्ञानिका अपि सूर्यग्रहणदर्शनं हानिकरमिति स्वीकुर्वन्ति। सूर्यग्रहण-स्यावलोकनेन नेत्रयोर्ज्योतिर्विनष्टा भवति। अतो न केवलं सूर्यग्रहणदर्शनस्य निषेधः अपि तु चन्द्रग्रहणस्यापि दर्शनं हानिकरमिति। विशेषतश्च तेषां कृते

येषां राशौ हानिकरं फलं भवति।

एतत्सर्वं सूर्याचन्द्रमसोर्ग्रहणमधिकृत्य विवेचितम्। परमत्रैवेदं विचारणीयं यत् यदा सूर्यग्रहणं भवति तदानीं वस्तुतः पृथिव्या ग्रहणं भवति[१] न तु सूर्यस्य। यतो हि ग्रहणं मूलरूपेण छायया ग्रस्ते सति भवति। सूर्यस्य प्रखरप्रतिभया तस्योपरि पतिता छाया स्वयमेव विनष्टा भवति। केवलं चन्द्रस्यावरोधकत्वेन सूर्यग्रहणं दृश्यते। परं तदानीमेव सूर्यकिरणैरूत्पादिता चन्द्रच्छाया भूमौ पतति। अतः सूर्यग्रहणकाले पृथिव्या अपि ग्रहणं भवति।[1] अन्यपिण्डादवलोकनेन पृथिव्या ग्रहणं द्रष्टुं शक्यते। पूर्वमेव मया प्रतिपादितं यच् चन्द्रः सततं अर्द्धमेव प्रकाशितो भवति। अर्धं च कृष्णावर्णात्मकः। यथोक्तं सिद्धान्त शिरोमणौ—

तरणिकिरणसंगादेष पीयूषपिण्डो
दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति।
तदितरदिशि बालाकुन्तलश्यामलश्री-
र्घट इव निजमूर्तिश्छाययैवातपस्थः।।

अयमेवाप्रकाशितो भागः ग्रहणकाले दृश्यते। तथा चाप्रकाशितभागानुरोधेन समागता चन्द्रच्छाया भूपृष्ठोपरि ग्रहणसदृशं कृष्णत्वमुत्पादयति। एवमेव कदाचित् सूर्यमण्डलस्योपरिबुधस्य छाया दृश्यते। बुधः स्वकक्षायां भ्रमन् सूर्यमण्डलमतिक्रम्य गच्छति। तस्मिन् काले सूर्यमण्डलोपरि गमनशीला कृष्णच्छाया वर्तुलाकारा दृश्यते। इदं बुधकृतं सूर्यग्रहणं भवति। एतादृशं ग्रहणमागामिवत्सरे त्रिनवत्युत्तरएकोविंशतिशततमे नवम्बरमासस्य षट्तारिकायां दृश्यो भविष्यति। अन्येष्वपि ग्रहपिण्डेषु तेषामुपग्रहद्वारा ग्रहणं भवति परं तेषां दर्शनं दूरदर्शकयन्त्रद्वारा एव सम्भवति। यानि ग्रहणानि स्वचक्षुषा दृश्यानि न भवन्ति तेषां भौतिकं आध्यात्मिकं धार्मिकञ्च महत्वं न भवति। यत्र ग्रहणं दृश्यते तस्य प्रभावोऽपि तत्रैव भवति। अतः ग्रहणस्य धार्मिकदृष्ट्या महत्वं ग्रहणदर्शनेन सहैव वर्तते नान्यत्र।

इतिशम्



# दृक्सिद्धपञ्चाङ्गमस्योपयोगित्वञ्च

विदितचरमिदं यत् पञ्चाङ्गानां तिथि-वार-नक्षत्र-योग-करणानामेव समवाय: पञ्चाङ्गमिति कथ्यते। सूर्याचन्द्रमसो: गत्याश्रितान्येतान्यङ्गानि। अनयो: सूर्याचन्द्रमसो: स्वचक्षुषा प्रत्यक्षीकरणं प्रत्यहमस्माभि: क्रियते। अतएव इमावेव साक्षित्वेन ज्योतिशशास्त्रे विद्वद्भि: समादृतौ स्त:। अनयो: प्रत्यक्षत्वेन ज्योतिषस्यापि प्रत्यक्षत्वं प्रतिपादितम्। स्थितावस्यां दृक्प्रत्यक्षातिरिक्तं विचार एवाप्रासंगिक:। ज्योतिषशास्त्रे न कोऽप्याचार्यो दृक्प्रत्ययकारकस्य सिद्धान्तस्य विरोधं कृतवान् अपि तु पूर्ववर्तिसिद्धान्तस्य यथासम्भवं परिष्कार एव कृतवान्। इदं सत्यं यत् कालक्रमेण प्रायश: सर्वे सिद्धान्ता: इदानीं स्थूला: सञ्जाता: तत्रेदानीं दृक्प्रत्यययोग्यता न तथा विधा यथा अपेक्ष्यते। अत एतेषां पुन: संशोधनार्थं एषां दृक्प्रत्ययकारकत्वसिद्धये चास्माभि: कश्चन् समुचित: सर्वसम्मतश्च प्रयास: कर्त्तव्य:। नायं नूतन: प्रयासो भविष्यति अपि तु पूर्वाचार्याणामनुगमनं तेषां निर्देशस्य च पालनमेव भविष्यति। यतो हि काले काले तै: स्वकीयया प्रगल्भया धिया संशोधनेन परिष्कारबलेन चैतेषां शास्त्राणां संरक्षणं कृतम्। आचार्यवराहमिहिर-आर्यभट-ब्रह्मगुप्त-भास्करप्रभृतयो आचार्या: भारतीयज्योतिषशास्त्रस्य या परम्परा स्थापिता तस्या: परम्पराया: संरक्षणार्थं कालक्रमेण तत्रोपस्थितानां दूषणानां निवारणपुरस्सरं कमलाकरभट्ट गणेशदैवज्ञ-वेङ्कटेशबाबूकेतकरमहोदयाश्च प्रयासं कृतवन्त:। ऐते सर्वे आचार्या: दृक्प्रत्ययकारकस्य सिद्धान्तस्यैव समर्थका: पोषकाश्चासन्। कमलाकरभट्टस्तु सुस्पष्टमुदघोषितवान् —

"सुयुक्ता न मुन्युक्तिरप्यत्र शास्त्रे भवेत् कार्यवर्यस्य या दृग्विरुद्धा।[१] अतोऽसंशयं वक्तुं प्रभवामि यद् दृग्विरुद्धा मुनीनामप्युक्ति: शास्त्रेऽ-स्मिन् समाहता नास्ति। अनया उक्त्या इदं प्रतीयते यत् तदानीमपि एतादृशी स्थितिरासीत्। यद्यपि कमलाकरस्य आक्षेपस्थानं भास्कर एव विशेषेणासीत् तथापि वाक्यमिदं दृक्सिद्धान्ते तस्य दृढां निष्ठां प्रकटयति। आचार्यभास्करो दृक्सिद्धान्तस्यैव समर्थका आसन् परं कमलाकरेण स्थाने स्थाने तस्य

---

१. सि.त.वि.

सिद्धान्तानां खण्डनं कृतं कुत्रचित् द्वेषबुद्ध्या कुत्रचिच्च शास्त्रदृष्ट्या। भवतु नाम भास्करोऽपि सिद्धान्तशिरोमणौ स्पष्टरूपेण स्वाभिमतं दृक्सिद्धान्तं प्रति प्रकटितवान् —

''यात्राविवाहोत्सवजातकादौ खेटैः स्फुटैरेव फलस्फुटत्वम्।

स्यात् प्रोच्यते तेन नभश्चराणां स्फुटक्रिया दृग्गणितैक्यकृद्या।।

आर्षग्रन्थरूपेण प्रतिष्ठितस्य सूर्यसिद्धान्तस्याप्ययमेवपक्षः। तत्राऽपि दृक्-तुल्यानामेव ग्रहाणां साधनार्थं प्रतिज्ञा वर्तते।

तत्तद् गतिवशान्नित्यं यथा दृक्तुल्यतां ग्रहाः।

प्रयान्ति तत् प्रवक्ष्यामि स्फुटीकरणमादरात्।। सू. सि. २.१४

ज्योतिषशास्त्रीयग्रन्थेषु एतादृशी प्रतिज्ञा स्वाभाविकी शास्त्रस्वरूपानुरूपा च। परं पुराणेष्वपि दृक्सिद्धान्तस्योल्लेखः दृश्यते। यथा— वराहपुराणे पार्वतीपरमेश्वरयोः संवादप्रसङ्गे उक्तं वर्तते—

''कथमेतद् विजानीयां सूर्याचन्द्रमसोर्गतिम्।

यथा भवन्ति तिथयस्त्रिंशत् याः कथितास्त्वया।

चक्षुषा नैव सा ज्ञातुं शक्यते व्योमगाः स्थितिः।

अतिसूक्ष्मतया यस्माद् व्रतहानिर्भवेद् ध्रुवम्

ज्ञानोपायमतस्तस्या यथावद् वद मे प्रभो।।व. पु.।

अत्र चन्द्रदर्शनेन तिथेर्ज्ञानं स्थूलमिति मत्वा सूक्ष्मचान्द्रगणनायाः संकेतः वर्तते। स्थूलतिथ्यां व्रतहानेः सम्भावना वर्तते। एतेन स्पष्टं यत् यदि चान्द्रगणना शुद्धा वर्तते तदा तिथेर्मानमपि शुद्धमेव। सूर्यस्य साधने न तथा कष्टं यथा चन्द्रसाधने वर्तते। यदि केवलं सूर्याचन्द्रमसोः स्पष्टतरं ज्ञानं भविष्यति तदा न केवलं तिथेर्मानं शुद्धं भविष्यति अपितु समग्रं पञ्चाङ्गमेव शुद्धं भविष्यति। यतो नक्षत्र-योग-करणानां साधनेऽपि अनयोरेव मानमपेक्ष्यते। अग्रे भगवता शिवेन स्फुटग्रहसाधनार्थं कश्चन निर्देशोऽपि कृतः। सः अवश्यमेवा-

स्माभिश्चिन्तनीयः।

> "ततः सूर्यश्च मुनयः स्वं स्वं सिद्धान्तमूचिरे।
> यस्मिन् देशे यदा काले यद् यत् सिद्धान्तमार्गतः।
> उदयास्तं ग्रहाणां स्याद् ग्रहणं चन्द्रसूर्ययोः।
> विधोर्विलोकनं वापि भवेत् तत्पक्षमाश्रितः।।इत्यादि।

अत्रासंशयं निर्देशो वर्तते यत् येन सिद्धान्तेन चन्द्रसूर्योपरागयोः चन्द्रोदयास्तयोश्च साधनं क्रियते तेनैव सिद्धान्तेन तिथ्यादीनामपि साधनं कर्त्तव्यम्। यदि एवं न भविष्यति तदा व्रतोपवासादीनां मुहूर्त्तानाञ्च महत्वं स्वयमेव विनष्टं भविष्यति। आचार्येण मल्लारिणा ग्रहलाघवस्य टीकायां लिखितम् — "यस्मिन् यस्मिन् काले यद् यद् दृग्गणितैक्यकृत् तदेव ग्राह्यं घटमानत्वात् ।" एवं सर्वत्रैव चर्चा दृग्गणितैस्यैव वर्तते। परमेतेनापि कार्यसिद्धिर्न भवति। कल्प्यते सूर्याचन्द्रमसोः दृक्सिद्धान्तेन सिद्धिर्जाता। तथापि तिथ्यानयने कश्चन विचारोऽ वशिष्टः। धर्मशास्त्रस्य प्रमाणवाक्यं वर्तते "बाणवृद्धिरसक्षयात्मिका तिथिरेव ग्राह्या। यद्यप्ययं ज्योतिषशास्त्रस्य तिथेर्नियामकं वाक्यं नास्ति। परं शास्त्रा-न्तरस्य तु वर्तत एव। वस्तुतः इदं वाक्यं मानव मस्तिष्कजन्यं वर्तते। तिथिमानं तु मानवाधीनं नास्ति तत्तु सूर्याधीनं चन्द्राधीनं च वर्तते। अतस्तिथिमधिकृत्य कश्चन्नियामकं वाक्यं सापेक्ष्यमेव भवितुमर्हति न तु शाश्वतिकम्। यतो हि तिथेः साधनं सूर्याचन्द्रमसोः सकाशादेव भवति यथा पूर्वमेवोक्तम्। अनयोर-स्थिरत्वात् तिथिमानमप्यस्थिरम्। अतो भवेन्नाम कदाचित् कस्मिन् काले बाणवृद्धिरसक्षयात्मिका तिथिः शुद्धा, इदानीं तु सा न व्यवहारयोग्या। इतिहासपृष्ठावलोकनेनेदं स्पष्टं भवति यत् कालभेदात् तिथेरपि ह्रासवृद्ध्योः परिमाणेऽपि परिवर्तनं भवितुमर्हति। यथा वैदिककाले तिथेः स्वरूपं सर्वथा भिन्नमासीत् । तदानीं चान्द्रमासस्य त्रिंशद् भागात्मकः कालस्तिथिरासीत् ।

यथा— $\frac{\text{चान्द्रो मासः}}{\text{३०}} = \frac{\text{२९.५३}}{\text{३०}} = .\text{९८४३५३}$ दिससात्मकः एकतिथेर्मानम् तच्च एकदिवसान्न्यूनः अनया रीत्या प्रतिपादितः पञ्चदशीं

पर्यन्तं तिथेर्गणनायाः व्यवहार आसीत्। परं शनैः शनैः सिद्धान्तज्योतिषस्य विकासेन सूर्याचन्द्रमसोः स्फुटगतिज्ञानेन च तिथिमानमपि परिवर्तितम्। इतिहासकाराणां मतेन ४०० ईशाब्दारम्भात् तिथिगणनायाः परिष्कृतं स्वरूपं व्यवहारे समायातम्। ततोऽनुदिनं सिद्धान्तज्योतिषशास्त्रे संशोधनं संवर्धनं परिष्कारक्रमञ्च प्रचलितम्।

इदानीं तिथे परिष्कृतं स्वरूपं व्यवहारे वर्तते। तच्चैवम् — "रविचन्द्रयोः भगणान्तरं चान्द्रमासाः भवन्ति। यथोक्तं भास्कराचार्येण "अन्तरं तरणि-चन्द्रचक्रजं यत् स विधुमास सञ्चयः।" (सि. शि.) एकस्मिन् रव्यब्दे रवेर्भगणसंख्या एक एव भवति। चान्द्रभगणाश्च त्रयोदश। अनयोरन्तरम् (१३-१ = १२) द्वादश मासाश्चैत्रादयो भवन्ति। एकस्मिन् मासे त्रिंशत् संख्याकास्तिथयो भवन्ति। अमान्तादमान्तं यावच्चान्द्रो मासः। अमान्तो नाम सूर्याचन्द्रमसोर्योगः एकत्र स्थितिर्वा राश्यादिमानेन। अतो रविन्द्वोरेकयोगादपरयोगं यावदेकश्चान्द्रो मासः। तत्रोभयोरन्तरांशाः ३६०° (षष्ट्युत्तरशतत्रयमिता) भवन्ति। एष्वन्तरांशेषु त्रिंशत् संख्याकाः तिथयो व्यतीताः भवन्ति। अतोऽनुपातः क्रियते—

यदि त्रिंशत् तिथिषु षष्ट्युत्तरशतत्रयमितान्तरांशास्तदा एकतिथिसम्बन्धि रविचन्द्रयोरन्तरांशैः किमिति— $\frac{३६०\times१}{३०} = १२$ । अत्र लब्धान्तरांशाः द्वादशपरिमिता। अनेन सिद्धं यत् रविचन्द्रयोर्योगाद् द्वादश अंशं यावदन्तर-मेकतिथेर्मानं भवति।

अत्र निष्कर्ष रूपेण इदमेवायाति यत् दृक्प्रत्यय सिद्ध्यर्थं भारतीय-सिद्धान्तेषु परिष्कारोऽपेक्ष्यते। तत्र परिष्कारस्य स्वरूपं विद्वद्भिः सम्भूय विचारणीयम्। अन्यथा शास्त्रस्य रक्षणमपि दुष्करं भविष्यति। दृक्प्रत्यय-स्योद्घोषः भारतीयशास्त्रकाराणामेव वर्तते। अतो नान्यः पन्था परिष्कारं विना।



# महर्षिवाल्मीकेः ज्योतिषशास्त्रीया दृष्टिः

नक्षत्रग्रहताराणामधिपो विश्वभावनः।

तेजसामपि तेजस्वी द्वादशात्मन् नमोस्तु ते।। वा. रा. ६.१०५.१५

आदिकवेर्महर्षिवाल्मीकेर्भारतस्येतिहासभूतायां रचनायां त्रिस्कन्धात्मकस्य ज्योतिषस्योल्लेखः पदे पदे दृश्यते। विस्तृतं भूगोलवर्णनमन्तरिक्षस्य विवेचनं, शकुनानि, जातकमङ्गलक्षणप्रभृतयो बहवो विषयाः महर्षेर्ज्योतिषानुरागं सुस्पष्टतया प्रदर्शयन्ति। कथाव्याजेनापि ज्योतिशास्त्रस्य केषाञ्चन गूढविषयाणां सरलतयोपस्थापनमादिकवेः पाटवमभिव्यञ्जयति। वाल्मीकीयरामायणे समागतेषु ज्योतिषविषयेषु केचनंशाः समासेनात्रोपस्थापनाय प्रयासः क्रियते।

सर्वप्रथमं भगवतो रामचन्द्रस्य जन्मकालिकं विवरणं प्रस्तूयते। महर्षिणा उक्तम्[१] यत् पुत्रेष्टि-यज्ञानन्तरं षड्ऋतुषु व्यतीतेषु (अर्थात् द्वादशमासानन्तरं) चैत्रशुक्लनवम्यां पुनर्वसुनक्षत्रे कर्कलग्नोदये, चन्द्रेण सह लग्नस्थिते देवगुरौ कौशल्या सर्वगुणसम्पन्नं राममजनयत्। तदानीं सूर्य-भौमगुरुशुक्रशनैश्चराः स्वस्वोच्चराशौ स्थिता आसन्। एवं प्रायशो दिवसान्तरेण पुष्यनक्षत्रे कैकेयी भरतं तथा च सुमित्रा लक्ष्मणं शत्रुसूदनञ्चाजनयत्। अत्र जन्म-प्रसंगे ऋतुमासतिथिनक्षत्रलग्नादीनां विशिष्टयोगानाञ्च संकेतः कृतः। एवमन्येऽपि बहवो ज्योतिषशास्त्रीया प्रसंगास्सन्ति येषां चर्चा बहुबारं बहुभिः कृता अतस्तेषां सर्वेषामत्र उल्लेखो मया न क्रियते। केवलं ये विशिष्टा विषयाः सन्ति ते एवात्रोपस्क्रियन्ते।

**१. वायुस्कन्धाः–** भूमिं परितो ऊर्ध्वोर्ध्वक्रमेण सप्तवायोः स्कन्धाः सप्तलोकानावृत्य प्रबहन्तीति। तेषां विषये वाल्मीकीयरामायणे एका कथा वर्तते। एकदा इन्द्रो दितेर्गर्भं प्रविश्य गर्भस्थं शिशुं सप्तधा खण्डितवान्, अनया घटनया दितिः खिन्ना भूत्वा इन्द्रं जगाद। त्वया प्रियं न कृतम्। अतः

१. १.१८.८-१०

एतान् खण्डान् तथा कुरु येन एते लोकपाला भवेयुः।[१] दुःखितायाः दितेरिच्छया ते गर्भखण्डाः सप्त सप्त स्वरूपात्मकाः सप्त मरुद्गणा अभूवन्। सप्तसप्तात्मका अर्थात् एकोनपञ्चाशत् मरुद्गणा वायवो वा सञ्जाताः। सप्त स्वरूपात्मकाः सप्त वायवः क्रमेण सप्तवायोः स्कन्धरूपेण प्रतिष्ठिताः। तेषां नामानि चैवम् —

१.आवहः, २. प्रवहः, ३. संवहः, ४. उद्वहः, ५. विवह;, ६. परिवहः, ७. परावहः। ज्योतिषशास्त्रेपि अनेनैव क्रमेण सप्तवायूनां वर्णनं वर्तते। तत्र भूमिं परितो प्रथमं भूवायोर्मण्डलं वर्तते येनास्माकं जंगमानां स्थावराणां जीवनयात्रा प्रचलति। तदनन्तरं ऊर्ध्वोर्ध्वक्रमेण आवहादयो वायवः सन्ति। एषु प्रवहवायोः चर्चा ज्योतिषे विशेषेण भवति। यतो हि प्रवहवायुरेव ग्रहान् प्रेरयति। यथोक्तं सूर्यसिद्धान्ते —

प्रवहाख्यो मरुत् तांस्तु स्वोच्चाभिमुखमीरयेत्।[२]

आवहसंज्ञकोवायुर्भूमेरावरणमस्ति। अस्मादेव भूमेर्वायुमण्डलस्य, वर्षायाः, मेघादीनाञ्च संरक्षणं भवति। एवमन्येषामपि वायुमण्डलानां भिन्नं-भिन्नं कार्यक्षेत्रं च वर्तते। ते स्वस्वलोके स्वीयं स्वीयं कार्यं निर्वहन्ति लोकान् रक्षन्ति च।

**२. ब्रह्माण्डविस्तारः–** सीताया अन्वेषणप्रसंगे किष्किन्धाकाण्डे चतुर्दिक्षु प्रेषिता वानरप्रमुखाः सीमान्तं यावद्गत्वा ततः परावृत्य समानं वक्तव्यं दत्तवन्तः। भूयो भूयः महर्षिणा वाल्मीकिना उद्धृतम्[३] —

एतावद् वानरैः शक्यं गन्तुं वानरपुंगवाः।
अभास्करममर्यादं न जानीमस्ततः परम्।।

वानराणामियमुक्तिः गीतायां भगवतः श्रीकृष्णस्येदं वाक्यं स्मारयति।

---

१. १.४७. १-७

२. सू. सि. २.३

३. वा. रा. ४.४०.६८,४.४२.५१, ४.४३.५८-५९

न तद् भासयते सूर्यो न शशाङ्को न पावकः।

यद् गत्वा न निर्वतन्ते तद्धाम परमं मम॥[1]

वस्तुत इयं स्थितिर्ब्रह्माण्डस्य सीमान्तप्रदेश एव दृश्यते। यतो हि ब्रह्माण्डान्तं यावत् सूर्यस्य करप्रसारो भवति। ब्रह्माण्डात्परं प्रकाशाभावः, घोरान्धकारावृतोऽनन्ताकाश एव वर्तते। ज्योतिषे ब्रह्माण्डस्य सीमा सूर्यस्य प्रकाशं यावदेव परिभाषिता वर्तते। उक्तञ्च सूर्यसिद्धान्ते—

कल्पोक्तचान्द्रभगणा गुणिता शशिकक्षया

आकाशकक्षा सा ज्ञेया करव्याप्तिस्तथा रवेः। सू. सि. १२.८१

अनया रीत्या यदि गणना क्रियते तदा ब्रह्माण्डस्य सीमाप्रमाणमेवं भवति—

कल्पचान्द्रभगणाः × चन्द्रकक्षायोजननानि = आकाशकक्षा

युगचान्द्रभगणाः = ५७७५३३३६। एते सहस्रगुणिताः कल्पे स्युर्भगणादयः इत्यादिना

५७७५३३३६ × १००० = ५७७५३३३६००० कल्पचान्द्रभगणाः

चन्द्रकक्षायोजनानि = ३२४०००। अतः उभयोः गुणनेन जातम् —

५७७५३३३६००० × ३२४००० = १८७१२०८०८६४००००००

योजनानि आकाशकक्षायाः प्रमाणम्

एतावद्योजनं यावद् सूर्यकरप्रसारो भवति तदनन्तरं सर्वथा अन्धकार एव।

यावदहं जनामि वानराणां वक्तव्यव्याजेन ब्रह्माण्डस्य सीमा महर्षिभिः प्रदर्शिता।

**३. भूमेः स्वरूपम्** – वानरराजसुग्रीवो भूमेः स्वरूपं वर्णयन्नुक्तवान् —

आदर्शतलसंकाशा ततो वै पृथ्वी मया।

अलातचक्रप्रतिमा दृष्टा गोष्पदवत् कृता॥ वा० रा० ४.४६.१३

१. गीता १५.६

अत्र आदर्शतलसंकाशा, अलातचक्रप्रतिमा, इति शब्दद्वयं विचारणीयम्। इयं भूमिः सर्वत्र समतलाकारा मुकुरोदरसन्निभा दृश्यते। परमस्य वास्तविकं स्वरूपमेतादृशं नास्ति। पृथ्वी वर्तुलाकारा अलातचक्रवत् कन्दुकारा वा वर्तते। अस्याः समत्वं वर्तुलत्वं वा स्यात् इत्याशंकां परिहरन् आचार्यभास्करो वक्ति—

यदि समा मुकुरोदरसन्निभा भगवती धरणी तरणिः क्षितेः।

उपरि दूरगतोऽपि परिभ्रमन् किमु नरैरमरैरिव नेक्ष्यते।

यदि निशाजनकः कनकाचलः किमु तदन्तरगः स न दृश्यते।

उदगयं ननु मेरुरथांशुमान् कथमुदेति च दक्षिणभागके।।

सि. शि. भू. ११,१२

अर्थात् यदि पृथ्वी समा मुकुरोदरसन्निभा स्यात् तदा ऊर्ध्वगतः खमध्यस्थो भास्करः सर्वैः जनैः कथन्नावलोक्यते। यदि मेरुणान्तर्हितः सूर्यस्तदा मेरुः कथन्न दृश्यते। अर्थात् भूमेः समत्वे सति रवेर्दर्शनं सदैव भविष्यति। तदानीं उदयास्तयोः स्थितिरेवासम्भवा। एतादृशी स्थितिर्भूमे वर्तुलत्वे एव सम्भवति नान्यथा। इयं भूर्गोलाकारा आकाशे निराधारा स्वशक्त्या तिष्ठति। यथोक्तं सूर्यसिद्धान्ते —

मध्ये समन्तादण्डस्य भूगोलो व्योम्नि तिष्ठति (सू. सि. १२.३२)

आचार्यभास्करेणापि भूमेः स्वरूपस्यातीव रमणीयं विस्तृतञ्च विवेचनं कृतम्। तद्यथा—

भूमेः पिण्डः शशांकज्ञकविरविकुजेज्यार्किनक्षत्रकक्षा-

वृत्तैर्वृत्तो वृतः सन् मृदनिलसलिलव्योमतेजोमयोयम्।

नान्याधारः स्वशक्त्यैव वियति नियतं तिष्ठतीहास्य पृष्ठे

निष्ठं विश्वं च शश्वत्सदनुजमनुजादित्यदैत्यं समन्तात्।।

सर्वतः पर्वतारामग्रामश्चैत्यचयैःस्थितः।

कदम्बकुसुमग्रन्थिः केसरप्रसरैरिव॥ ( सि. शि. भू. भु. २-३ )

अत्र भूमेरुपमा कदम्बकुसुमैः सहातीव समीचीना प्रतिभाति। अतो भूमेः वर्तुलत्वमसन्दिग्धम्। अग्रे अस्य समत्वदर्शने हेतु प्रदर्शयन्नाचार्यो वक्ति—

समो यतः स्यात् परिधेः शतांशः पृथ्वी च पृथ्वी नितरां तनीयान्।

नरश्च तत् पृष्ठगतस्य कृत्स्नां समेव तस्य प्रतिभात्यतः सा॥

अत्राशयो यत् कस्यापि परिधेः शतांशः समः सरलो वा दृश्यते। वयं तु शतांशादल्पमेव पश्यामः। गणितीयसिद्धान्तो वर्तते यत् ''परिधेः षण्णवत्यंशो दण्डवत्परिदृश्यते।''

अस्मादेव कारणाद् भूमेः समत्वं दृश्यते। अत्र रामायणे आदर्शतल-संकाशा अलातचक्रवच्चोभयोः शब्दयोर्युगपत्प्रयोगः समीचीनः व्यावहारिकश्च।

**४. कृत्रिमतारकस्य निर्माणं प्रक्षेपणञ्च –** इदानीमन्तरिक्षस्य ग्रहाणाञ्च रहस्य-ज्ञानाय नूतनानुसन्धानार्थं वैज्ञानिका अन्तरिक्षे कृत्रिमोपग्रहाः प्रक्षिपन्ति। तेषां काचिदवधिर्भवति तावत्कालपर्यन्तं ते उपग्रहाः कार्यं कुर्वन्ति अनन्तरं ते विनष्टा भवन्ति। परं विश्वामित्रेण प्रक्षिप्तः कृत्रिमतारकोऽद्यापि दक्षिणाकाशे देदीप्यमानो दृश्यते।

विश्वामित्रद्वारा त्रिशंकोः सशीररस्वर्गारोहणस्य कथा अतिप्रसिद्धा एव वर्तते। अस्यां कथायां कश्चन विचारणीयः पक्षोऽस्ति। राजा त्रिशंकुरन्तरिक्ष-यात्रायामनुरक्त आसीत्। स सशरीरं स्वर्गं गन्तुकामनया यज्ञार्थं निवेदयामास, परं तस्य प्रस्तावो न कैश्चित् स्वीकृतः अपि तु वसिष्ठादिभिः स तिरस्कृतः। अन्ते विश्वामित्रस्यान्तिकं गत्वा स्ववेदनां निवेदयामास। विश्वामित्रस्तस्य प्रस्तावं स्वीकृत्य सोत्साहमुक्तवान् —

पश्य मे तपसो वीर्यं स्वार्जितस्य नरेश्वरः।

एष त्वां सशरीरेण नयामि स्वर्गमोजसा॥ वा. रा. १.६०.१३

विश्वामित्रोन्तरिक्षविद्यायां शस्त्रविद्यायां कृषिविद्यायाञ्चातीव निपुणा आसन्। ते सृष्टेः रहस्यमपि जानन्तिस्म। अस्मादेव तेषां प्रतिष्ठा अपरब्रह्मणो रूपेणासीत्। आवश्यकीमितिकर्तव्यतां प्रपूर्य तं सशरीरं स स्वर्गं प्रेषितवान्। परं स्वर्गाधिप इन्द्रस्तं न स्वीचकार। तेन बलात् त्रिशंकुं भूम्यभिमुखमपातयत्। पतन्तं त्रिशंकुमवलोक्य क्रुद्धो विश्वामित्रो भूस्वर्गयोर्मध्ये मध्याकाश एव स्वतपोबलात् तं स्थापयामास। अद्यापि त्रिशंकुः दक्षिणमण्डले तारकेष्वन्यतमतारकरूपेण दृश्यते। अत्र सूक्ष्मेक्षिकया विचार्यमाणे सति इयं घटना कैश्चन मनुष्यैः सह न संघटते। इदं महर्षिविश्वामित्रनिर्मितं तारकमेवासीत् त्रिशंकोर्नाम्ना प्रक्षिप्तम्। इदमपि सम्भाव्यते यत् राजा त्रिशंकुरपि सशरीरो यानेन सह प्रक्षिप्त आसीत्। इन्द्ररूपा या शक्तिरासीत् यया पराभूतस्य त्रिशंकोः मार्ग-परिवर्तनं जातं सा ब्रह्माण्डान्तरीया काचित् आकर्षणविकर्षणात्मिका शक्तिरासीत्। भवतु नाम त्रिशंकोः तारकत्वं महत्वं वा असन्दिग्धम्। महर्षिणा निमित्तप्रसंगे स्वयमेवोक्तम् — "त्रिशंकुलोहिताङ्गश्चे[१]त्यादिः।

एतेन त्रिशंकोः ग्रहत्वमेव नक्षत्रत्वं वा सुस्पष्टं प्रतिभाति। महर्षिविश्वामित्रस्यास्त्रशस्त्रविद्ययासह तेषां सृष्टिनिर्माणविषयिणी प्रतिभापि कैश्चित्तिरोहिता नास्ति। तेषां कृते अन्तरिक्षयानस्य निर्माणं कस्यचित्तारकस्य वा रचना अकल्पनीया नास्ति। अस्यान्तरिक्षयानस्य नूतननिर्माणस्य पुष्टिः स्वयमेव महर्षिणा वाल्मीकिना कृता। तेनोक्तं यत् विश्वामित्रेण न केवलं त्रिशंकोः रचना कृता अपितु दक्षिणमण्डले अपरं सप्तर्षिमण्डलमप्यसृजत्। यथोक्तं रामायणे—

ऋषिमध्ये स तेजस्वी प्रजापतिरिवापरः।

सृजन् दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः।। 1.60.20-21

अनया वाल्मीकेः स्पष्टोक्त्या निर्माणसम्बन्धि सर्वासां शंकानां समाधानं

१. त्रिशङ्कुर्लोहिताङ्गश्च बृहस्पतिबुधावपि।
दारुणाः सोममभ्येत्य ग्रहाः सर्वे व्यवस्थिताः।। 2.41.।।

स्वयमेव जातम्। नैतावतं क्रोधाभिभूतस्य विश्वामित्रस्य नूतनान्यलोकस्य निर्माणाय इयं दृढा प्रतिज्ञा आसीत् —

"अन्यमिन्द्रं करिष्यामि लोको वा स्यादनिन्दकः।।" वा. रा. 1.60.23

वाल्मीकीयरामायणस्याधारेणासंशयं वक्तुं प्रभवामि यत् तदानीमन्तरिक्षानुसन्धानं तत्र नूतननिर्माणं यानप्रक्षेपणमित्यादयो विषयाः केवलं काल्पनिकाः नासन् अपि तु व्यवहारिका आसन् । विषयेऽस्मिन् विश्वामित्रस्य कार्याणि प्रमाणभूतानि सन्ति। विश्वामित्रेण कृता अन्या अन्नादीनां सृष्टिः लोके सुप्रसिद्धा एव।

५. मेरुः-'मेरु'पदेन सर्वत्र सौम्ये सुमेरुः याम्ये च कुमेरु इत्याशयो गृह्यते। प्रायशः सर्वैः पौराणिकैर्दैवज्ञैश्च मेरोः स्थानं भूमौ ध्रुवस्थानमेव स्वीकृतम्। परं वाल्मीकीयरामायणे प्रतीच्यामपि मेरोः स्थितिः प्रदर्शिता वर्तते। प्रतीच्यां प्रेषिता सुषेणादयो वानरा तत आगत्य उक्तवन्तो यत्-

"तेषां मध्ये स्थितो राजा मेरुरुत्तमपर्वतः।

आदित्येन प्रसन्नेन शैलो दत्तः वरः पुरा।।" वा. रा. 4.42.38

अग्रे सुषेणेनोक्तं यत् अत्रैव सूर्यो अस्तंगतो[१] भवति। मेरोरग्रे गमनमसम्भवम्। ततः परं किमस्तीति न जानीमः।

ज्योतिषशास्त्रे ध्रुवस्थानमेव मेरुपदेन व्यवह्रियते। उत्तरध्रुवस्थानं मेरुः सुमेरुर्वा कथ्यते। एवमेव दक्षिणध्रुवस्थानं कुमेरुरिति। सुमेरौ देवानां स्थितिः कुमेरौ च दैत्यानाम्। तत्र षण्मासात्मको दिवसः षाण्मासिकी च रात्रिर्भवति। परस्परं विपरीतदिशि स्थितत्वात् यदा सुमेरौ दिवसस्तदा कुमेरौ रात्रिर्भवति। एवमेव यदा कुमेरौ दिवसस्तदा सुमेरौ रात्रिर्भवति। अस्मादेव देवदैत्ययोः भूमौ वर्ष-प्रमाणेन एकवर्षात्मकमहोरात्रं भवति। देवानां सुमेरुवासिनां दिवसारम्भो मेषादिस्थे रवौ भवति। अर्थात् मेषादितो कन्यान्तं यावत् सुमेरौ देवभागे षड् मासात्मको दिवसः तथा च तुलादितो मीनान्तं यावत् षड् मासात्मको दैत्यभागे कुमेरौ दिवसो भवति। यथोक्तं सूर्यसिद्धान्ते—

"मेषादौ देवभागस्थे देवानां याति दर्शनम्।

असुराणां तुलादौ तु सूर्यस्तद्भागसञ्चरः।।" सू.सि. 12.45

ज्योतिषशास्त्रदृष्ट्या मेषादितः कन्यान्तं यावत् रविरुत्तरगोले भवति तथा च तुलादितो मीनान्तं यावत् रविर्दक्षिणगोले भवति। यत्र रवेर्दर्शनं भवति तत्र दिवसः यत्र चादर्शनं तत्र रात्रिरिति। अनयोर्द्वयोर्मेर्वोः वर्णनं ज्योतिषे तु सर्वत्र वर्तते परं प्रतीच्यामस्ताचलस्थानेऽपि सुमेरुः इति रामायणादन्यत्र मया न दृष्टः। अपरमप्येकं वैचित्र्यं तत्र दृश्यते यत् सौम्ये यत्र सुमेरुः वर्तते तत्र रामायणे सोमसंज्ञकपर्वतस्योल्लेखो वर्तते। अयमेव पर्वतः सौम्यदिशि सीमान्तस्थः। विषयेस्मिन वानरैरुक्तम्

स हि सोमगिरेर्नाम देवानामपि दुर्गमः।

तमालोक्य ततः क्षिप्रमुपावर्तितमर्हथ।। वा. रा. 4.43.58.59

अस्मात्परमगम्यः। सोमपर्वतस्य यादृशं वर्णनमत्र वर्तते तेषु कानिचिल्लक्षणानि हिमालयपर्वतं संकेतयन्ति कानिचिच्च सुमेरुपर्वत-स्यानुकारीणि सन्ति। यथा—

समतिक्रम्य तं देशमुत्तरः पयसां निधिः।

तत्र सोमगिरिर्नाम मध्ये हेममयो महान्।। वा. रा. 14.43.53

अर्थात् उत्तरस्यां समुद्रस्य मध्यवर्ति क्षेत्रे कश्चन हेममयो महान् सोमगिरिनामकः पर्वतोऽस्ति। यदि अस्य पद्यस्याशयं गृह्यते तदा उत्तरसागरयोर्मध्यगतं सुमेरुरेव भवितुमर्हति नान्यः। यतो हि उत्तरसागरः उत्तरध्रुवं परितो वर्तते। तत्र हेममयः सुमेरुरेवास्ति। आचार्यभास्करेणापि सुमेरोः वर्णनप्रसंगे लिखितम्—

स इह हि मेरुगिरिःकिल मध्यगः कनकरत्नमयस्त्रिदशालयः।

द्रुहिणजन्मकुपद्मजकर्णिकेति च पुराणविदोमुमपवर्णयन्।। सि.शि.गो.भु. 31

एवं सोमपर्वतस्य प्रमुखानि लक्षणानि सुमेरुमेव संकेतयन्ति। इदमपि

सम्भाव्यते यत् सुमेरोरपरनाम सोमपर्वत इति। यतो हि सूर्याभावेपि हेममय-पर्वतस्य भासा तत्रत्य: प्रदेशो भाति इत्युक्तिस्तत्र सुमेरो: स्थितिं द्रढयति। यथोक्तम्—

स तु देशो विसूर्योऽपि तस्य भासा प्रकाशते।

सूर्यलक्ष्म्याभिविज्ञेयस्तपतेव विवस्वता।। वा. रा. 4.43.55

भूमौ ध्रुवप्रदेशावेव एवं भूतौ स्त: यत्र सूर्याभावो भवति। तत्र कारणं ध्रुवप्रदेशस्य स्थिति: भूमध्यरेखातो नवत्यंशान्तरे वर्तते; भूमध्यात् सौम्ये याम्ये च सूर्यस्य गति: २३.५ अंशं यावदेव भवितुमर्हति। स्थूलमानेन जिनांशं (२४ अंशं) यावदेव भवति। अत: स देश: सदैव विसूर्य एव भवति। यदा सूर्यो मेषादितो कन्यान्तं यावद् उत्तरगोले भवति तावत् कालपर्यन्तं उत्तरध्रुवप्रदेशे सूर्यस्य प्रकाशो दृश्यते। ध्रुवस्य खमध्ये सूर्यस्य स्थिति: कथमपि न सम्भाव्यते। ध्रुवप्रदेशस्य क्षितिजासन्ने मेषादौ रविरुदेति तथा च क्षितिजस्थ: कन्यान्ते अस्तं याति। अस्माकं दृष्ट्या विसूर्यस्यायमेवाभिप्राय: महर्षेर्वर्तते। अत: भूगोलदृष्ट्या खगोलदृष्ट्या च सुमेरुसोमयोर्मध्ये न किमप्यन्तरमित्यस्माकं मनीषा।

**६. अङ्गलक्षणानि-** भारतीयज्योतिषशास्त्रस्य संहितास्कन्धे स्त्रीणां पुरुषाणां पशूनां च शुभाशुभानि अङ्गलक्षणानि प्रतिपादितानि सन्ति। येषामाधारेण आकृत्या एव शुभाशुभस्य स्वभावस्य च ज्ञानं सरलतया कर्तुं शक्यते। अस्या: अङ्गविद्याया: विवेचनमवसरं प्राप्य महर्षिणा सुष्ठु कृतम् युद्धकाण्डे। रावणस्य मायया हतं राममवलोक्य विलापं कुर्वती सीता स्वकीयांगलक्षणानां निष्फलत्वं प्रदर्शयति-

उचुर्लाक्षणिका ये मां पुत्रिण्यविधवेति च।

तेद्य सर्वे हते रामे ज्ञानिनोऽनृतवादिन:।।

अपि च—

केशा: सूक्ष्मा: समा नीला भ्रुवौ चासंहते मम।

वृत्ते चारोमके जघे दन्ताश्चाविरला मम।। इत्यादय:

एवमत्र विपरीतफलव्याजेन स्त्रीणां शुभानि लक्षणानि निरूपितानि। अन्ते सीता कर्मण: गतिं प्रदर्शयन् उक्तवती—

शोधयित्वा जनस्थानं प्रवृत्तिमुपलभ्य च।
तीर्त्वासागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ।। (वा.रा. 6.48.15)

इतो प्रागपि महर्षिणा कर्मण: गतिं दैवमतिशेते इति त्रिशंकोर्मुखात् प्रदर्शितम् । तद्यथा—

दैवमेवं परं मन्ये पौरुषं तु निरर्थकम्।। (वा.रा. 1.58.22)

एतत् सर्वं सुप्रसिद्धमेव अतोऽत्र मया केवलं संकेत एव कृत:।

**7. निमित्तानि**-संहितास्कन्धे प्राकृतोत्पातानां पशुपक्षिजातानां शुभाशुभानां विवेचनं कृतं वर्तते। एतानि लक्षणानि निमित्तसंज्ञकानि शकुनानि वा भवन्ति। येषामुपयोगो यात्रायां युद्धयात्रायां शुभावसरे जनै: क्रियते। अत्रापि रामरावणयोर्युद्धप्रसंगे शकुनानां विवेचनं महर्षिणा संक्षेपेण कृतम्। यथा—

ववर्ष रुधिरं देवो रावणस्य रथोपरि।
वाता मण्डलिनस्तीव्रा व्यपसव्यं प्रचक्रमु:।।
महद् गृध्रकुलं चास्य भ्रममाणं नभस्थले।
येन येन रथो याति तेन तेन प्रधावति।।

इत्यादय: वा.रा. 6.106.21-34

**8. लङ्का**–ज्योतिषशास्त्रे लंकाया: स्थिति: भूमेर्मध्यगता वर्तते। वस्तुतो गणनायां सौकर्यार्थं भूमौ चतुर्दिक्षु भूमध्यरेखाया उपरि चत्वारि स्थानानि कल्पितानि सन्ति। तेषां नामानि समीपस्थ देशस्य नगरस्य वा नाम्ना सुनिश्चितानि। प्राच्यां भूमध्ये यमकोटि:, याम्ये लंका, प्रतीच्यां रोमकपत्तनम्, उदीच्यां च सिद्धपुरम् । उक्तं च सिद्धान्तशिरोमणौ—

लंका कुमध्ये यमकोटिरस्या: प्राक् पश्चिमे रोमकपत्तनं च।
अधस्तत: सिद्धपुरं सुमेरु: सौम्येऽथ याम्ये वडवानलश्च।।

(सि.शि.गो.भु. 17)

एतानि स्थानानि परस्परं कुवृत्तपादान्तरितानि सन्ति। अर्थात् लंकातः नवत्यंशान्तरे पश्चिमे रोमकं रोमकपत्तनात् नवत्यंशान्तरे उदीच्यां सिद्धपुरम्, सिद्धपुरात् नवत्यंशान्तरे प्राच्यां यमकोटिरिति। भारतवर्षस्य दक्षिणे यत्र भारतीयरेखासूत्रस्य भूमध्यरेखया सह सम्पातस्तत्रैव भूमध्यगतं लंकास्थानं सुनिश्चितम्। तस्यासन्ने एव रावणस्य राजधानी लंका आसीत्।

वाल्मीकीयरामायणे लंकायाः स्थितिः गृध्रराजेन सम्पातिना यदुक्तं तच्चैवम् —

इतो द्वीपे समुद्रस्य सम्पूर्णे शतयोजने।
तस्मिंल्लंकापुरी रम्या निर्मिता विश्वकर्मणा।। वा.रा. 4.58.20

अर्थात् भारतीयसीमान्ताच्छतयोजनविस्तीर्णे समुद्रान्ते रम्या लंकापुरी आसीत्। एतेनापि भूमध्यरेखान्तिके एवास्या लंकायाः स्थितिः सिद्ध्यति।

भूमध्यगतत्वादस्याः लंकायाः ज्योतिषशास्त्रीयं महत्वं वर्तते। कदाचित् शून्यदेशान्तरं भारतीयं रेखादेशमासीत्। इयं रेखा लंका-उज्जयिनी-कुरुक्षेत्र-सुमेरु प्रभृतीन् देशान् स्पृशती पृथिव्याः अपरपार्श्वमतिक्रम्य याम्यध्रुवमुल्लंघ्य पुनः लंकामेति। भास्करोपि रेखादेशं वर्णयन्नुक्तवान्

''यल्लंकोज्जयिनीपुरोपरिकुरुक्षेत्रादिदेशान् स्पृशत्
सूत्रं मेरुगतं बुधैर्निगदितं सा मध्यरेखा भुवः।।''

(सि. शि.म.भूप.2)

इयं रेखा विश्वस्य कालमानस्य नियामिका भवति। कदाचित् भारत-वर्षादेव विश्वस्य कालनिर्धारणं भवतिस्म परमिदानीं इयं गणना आंग्लदेशस्य ग्रीनह्विचनगरात् प्रचलति। परं भारतीया गणना प्राचीनसिद्धान्तानुसारमद्यापि स्वरेखादेशादेव भवति। लंकायाः भूमध्यगतत्वादद्यापि लंकायाः क्षितिज-स्याधारेण राशीनामुदयादीनां ज्ञानं क्रियते।

वन्दे वाल्मीकिकोकिलम्



# अन्नकूटस्य महत्वम्

अन्नकूटं नाम अन्नानां कूट: पर्वत: । अन्नं च कूटं च इत्यप्यवधेयम् । अत्रायं संकेतो यत् अन्नकूटस्य द्विधा व्यवस्था लोके प्रचलिता वर्तते। अन्नानां कूट: इति सर्वत्र प्रचलिता परम्परा विद्यते । अस्यां परम्परायां अन्नानां पक्वान्नानां समवाय: पर्वतीकृत्य विष्णवे, देव्यै अन्नपूर्णायै च नैवेद्याय समर्प्यते। यत्रान्नं च कूटं चैतादृशी व्याख्या गृह्यते तत्रान्नस्य प्रयोग: व्यञ्जने क्रियते तथा च तस्यार्पणं कूटाय गोवर्धनाय क्रियते। अर्थात् कुत्रचिदन्नकूटस्य सम्बन्ध: गोवर्द्धनोत्सवेन सह वर्तते। कुत्रचिच्चोभौ भिन्नौ भिन्नौ स्त:।

प्रत्यब्दं कार्तिकमासस्य शुक्लप्रतिपदि अयमन्नकूटोत्सव: समायाति । दीपोत्सवानन्तरं गृहे गृहे देवालये देवलाये च विविधानां व्यञ्जनानां निर्माणं देवाय चार्पणं भवति। यत्रायमुत्सव: गोबर्द्धनोत्सवेन सह सम्बद्धो वर्तते तत्र कृष्णावतारात् प्राग् भिन्ना परम्परा आसीत् । व्रतराजे बालखिल्याणां ऋषीणां मतमुपस्थापयन् निर्देशो वर्तते यदयं कृषकाणामुत्सव: । धान्य-च्छेदनानन्तरं वृष्टिप्रदातारं सुभिक्षकारकं इन्द्रं प्रति कृतज्ञता ज्ञापकं पर्व इदम् । अस्मिन् पर्वणि सर्वे जना: एकत्रीभूय विविधानां भोज्यपदार्थानां निर्माणं विधाय सश्रद्धं इन्द्राय समर्पयन्ति स्म । अनन्तरं गोक्रीड़ा, नृत्यगीतादिकञ्च कुर्वन्ति स्म । तेषामियं मनीषा आसीद् यदनया रीत्या इन्द्र: प्रीतो भूत्वा अस्माकं कल्याणं विधास्यति । कृषिवृद्ध्यै सुवृष्टिं करिष्यति लोके सुमिक्षं च भविष्यति ।

एकदा कृष्ण: गोबर्द्धनपर्वतस्यान्तिकं गत्वा गोपालैरायोजितमन्न-कूटोत्सवमपश्यत् । तत्र विविधानां पक्वान्नानां लेह्य-चोश्य-पेयादीनां निर्माणं नरनारीणां नृत्यगीतादिकं चावलोक्य कृष्ण: गोपानपृच्छत् । भो भो गोपाला: किं निमित्तमिदमायोजनम् ? कस्मै देवाय प्रीतये एते भोज्यपदार्था अत्रोपस्थापिता: । गोपाला: उक्तवन्त: अये कृष्ण त्वं न जानासि ? अय-

मुत्सवः इन्द्रस्य प्रीतये । अनेनोत्सवेन प्रीतो भूत्वा इन्द्रः सुवृष्टिं करोति अस्माकं कृते मांगल्यं दिशति । वयमपि प्रभूतमन्नमुत्पाद्य सुभिक्षञ्चावलोक्य प्रत्यब्दं इन्द्रं प्रति कृतज्ञतां ज्ञापयामः । त्वमपि अस्मिन् उत्सवे भागं गृहाण । तवापि कल्याणं भविष्यति।

कृष्णेनोक्तम् — भो गोपाः किमिन्द्र अत्रागत्य इदं सर्व स्वीकरोति ? भोज्यपदार्थानास्वादयति ? यदि नहि तर्हि को लाभः ? यः स्वीकर्त्तुं समर्थः तस्मै देयम् । अयं गोबर्द्धनपर्वतः सम्मुखे प्रत्यक्षतः तिष्ठति । अयमेवास्माकं रक्षकः वृष्टिकर्त्ता पालकश्च । अस्यैव पूजा विधेया । अयं सर्वान् पदार्थान् सोत्साहं ग्रहीष्यति । गोपाः परस्परं विमृश्य कृष्णमुचुः किमयं पर्वतः स्थाणुः एतान् भोज्यपदार्थान् गृहीतुं क्षमः? कृष्णेनोक्तम् आम् । समर्थोऽयम् स्वयमेवावलोक्याताम्। एवं श्रुत्वा गोपालाः विविधाः भोज्यपदार्थाः गोबर्द्धनपर्वतं पुरतः स्थापितवन्तः । तत्र पक्वान्नानां पर्वतमपि निर्मितवन्तः । एवं सर्वं तत्रोपस्थाप्य सर्वे गोपाः मुदितलोचना इदमुक्तवन्तः—

गोबर्द्धन धराधार गोकुलत्राणकारक ।
बहुबाहुकृतच्छाय गवां कोटिप्रदो भव ।।
लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता ।
घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ।।

क्षणानन्तरं गोपालाः नेत्रमुद्घाट्यावलोकितवन्तो यत् गोवर्द्धनेन सर्वे पदार्थाः भक्षिताः । गोपा आश्चर्यचकिताः सञ्जाताः । कृष्णेनोक्तम् पश्यन्तु भवन्त । अयं प्रत्यक्षो देवः । यदि सुखाभिलाषिणो भवन्तस्तदा ऽस्य गोबर्द्धन-स्योत्सवं कुर्वन्तु । गोपाः गोबर्द्धनं च प्रणम्य ततोऽधिकेनोत्साहेन गोबर्द्धनो-त्सवं चक्रुः । महर्षिणा नारदेन एतत्सर्वं वृत्तान्तं श्रुत्वा इन्द्र : कुपितस्तेषां विनाशाय चाचिन्तयत् । आवर्त्त-संवर्त-नील-द्रोण-पुष्कराणं मेघानां कुल-माहूय करकाभिर्घोराभिर्वृष्टिभिर्गोपान् गोकुलं गोबर्द्धनं च नश्यन्तु इति आदिष्टवान् । इन्द्राज्ञया सर्वे मेघाः घोराभिर्वृष्टिभिः गोकुलान् गोपालाञ्च पीडयामासुः । कृष्णस्तं गोबर्द्धनं अंगुल्युपरि उत्थाप्य तस्याधः सर्वे गोपकुलानाहूय तेषां संरक्षणं कृतवान् । अनन्तरं कृष्णस्य प्रभावं विज्ञाय

इन्द्रस्तस्यान्तिकं गत्वा कथयामास—

क्षन्तव्या माकृतिर्विष्णो दासोऽहं शरणागतः ।
यद्रोचते तत्प्रदेयमपराधापनुत्तये ।।

कृष्णः प्रीतो भूत्वा अकथयत् —

यदि प्रसन्नो देवेश उत्सवोऽयं प्रदीयताम् ।
गोबर्धनाय गिरये गोकुलं रक्षितं यतः ।।

ततः प्रभृति इयमन्नकूटपरम्परा गोबर्द्धनेन सह संयुक्ता जाता । अद्याऽपि काशीतोऽन्यत्र गोबर्द्धनोत्सवः अन्नकूटस्यावसरे कार्तिकशुक्लप्रतिपदि एव क्रियते । वस्तुतः गोवर्द्धनप्रसङ्गे कृष्णस्यैव प्राधान्यं वर्तते । अतो अन्नकूटपर्वणि निर्मिताः भोज्यपदार्थाः कृष्णाय, विष्णवे वा समर्प्यन्ते । अस्य माहात्म्यविषये लिखितं वर्तते —

प्रतिवत्सरं तस्मादन्नकूटो विधीयताम् ।
गवां भवति कल्याणं पुत्रपौत्रादि सन्ततिः ।।
ऐश्वर्यं च सदा सौख्यं भवेद् गोबर्द्धनोत्सवात् ।
श्रीकृष्णस्य तु संतुष्ट्यै अन्नकूटो विधीयताम् ।।

एवमियमेका परम्परा कुत्रचिन् मूलरूपेण कुत्रचिच्च किञ्चिदन्तरेणाद्यापि विद्यमाना वर्तते ।

अन्नकूटमुद्दिश्य काश्यां सर्वथा भिन्ना परम्परा वर्तते । अन्नाधिष्ठातृदेवी साक्षादन्नपूर्णा स्वयमेव विराजते । यत्रान्नकूटावसरे विविधमिष्ठान्नैः देव्याः शृंगारो भवति । तत्र षट्पञ्चाशत् व्यञ्जनानां नैवेद्यं भवति । अत्र काश्यां अन्नकूटः स्वतन्त्रोत्सवः । अयं दीपोत्सवादपर दिवसे कार्तिक शुक्ल प्रतिपदि भवति । परमद्य गोबर्द्धनोत्सवो न भवति । कार्तिक शुक्ल द्वितीयायां गोबर्द्धन पूजा भवति । अयं गोबर्धनोत्सवोऽपि किञ्चिद् भिन्नः । अत्र गोमयेन गोबर्द्धनस्य प्रतिमां निर्माय स्थानभेदेन विभिन्नरीत्या पूजनं भवति । अतः

असंशय- मन्नकूटः काश्यां गोबर्धनाद् भिन्न एव।

दीपोत्सवे लक्ष्म्या पूजनं विधाय तदनन्तरं काशीपुराधीश्वर्याः अन्नपूर्णायाः पूजनं भवति। लेह्य - चोश्य - पेय - भक्ष्यादिभेदेन विविधानां भोज्य-पदार्थानां मधुर-तिक्त-कटु-कषायाम्ल-लवणयुतानां षड्रसानां च साकल्येन युतिः पाकशास्त्रस्य महत्वं प्रतिपादयति । भारतीयसंस्कृतौ अन्नपरिष्कारस्य तेषां सुष्ठु प्रयोगस्य च काचन सुदृढा सुव्यवस्थिता च परम्परा आसीदित्यस्य स्मरणमस्मिन्नवसरे भवति । यथा संस्कृतेरन्येषां पक्षाणां शनैः शनैः ह्रासो भवति तथैव भारतीयानां भोज्यपदार्थानां तेषां निर्माणविधीनाञ्चापि लोपो शनैः शनैः दृश्यते । इदानीमेका नूतना संस्कृतिः प्रचलिता वर्तते । स्वादुरहितस्य शुष्कस्य घृतादिविहीनस्य भोज्यपदार्थस्यैव माहात्म्यमिदानीं वर्तते। परं प्राचीना परम्परा अतीव समृद्धा आसीत् यस्य किञ्चिद्दिर्शनमन्नकूटावसरे भवति । भारतीयपाकशास्त्रे 'मसाला' संज्ञकानां एलालवङ्गादीनां प्रयो॰ा विहित आसीत् तत्र केवलं जिह्वातोष एव उद्देश्यं नासीत् । 'मसाला' संज्ञकाः ये पदार्थाः आसन् ते सर्वे औषधिरूपा आसन् अद्यापि तेषां प्रयोगः विविधरोगानुपत्तये क्रियते । यथा — पिप्पली विषये लिखितं वर्तते—

पिप्पली ज्वरहा कृष्या स्निग्धोष्णा कटुतिक्तका ।
दीपनी मरुतश्वासश्लेष्मक्षयापहा ।।

एवमेव मरिचस्य गुणाः-

मरिचं कटुतिक्तोष्णं लघु श्लेष्मविनाशनम् ।
समीर-क्रिमिहृद्रोगहरं च रूचिकारकम् ।।

एवमेव —

एलाद्वयं शीतलतिक्तमुक्तं सुगन्धिपित्तार्तिकफापहारि ।
करोति हृद्रोगमलार्तिवस्तिशूलघ्नमत्र स्थविरा गुणाढ्याः।

एवमन्येषां धान्य-लवङ्गादीनां गुणं निर्दिष्टं वर्तते। येषां व्यवहारो लाभाय वर्तते। अतोऽस्माकं दृष्टया एतेषां पदार्थानामुपयोगः भोज्यपदार्थेषु स्वास्थ्यकरं न तु हानिकरम् । भवतु नाम अस्माकं परम्परा समृद्ध भोजनस्यासीद् यथोक्तं भास्करेण —

"भोज्यं यथा सर्वरसं विनाज्यम्"

अर्थाद् आज्यरहितं भोजनं व्यर्थमिति । अतो हेतोः प्राचीनपरम्परायां पक्वान्नस्यैव माहात्म्यमासीत् । तण्डुलादीनां प्रयोगेऽपि घृतादीनां व्यवहारः आसीत् । अन्नकूटावसरे निर्मिताः पदार्था प्रायशः घृताक्ता दुग्धनिर्मिता वा भवन्ति । देवानां कृते पक्वान्नस्यैव व्यवस्था शास्त्रेषु वर्तते। तत्र कारणं पक्वान्नेषु वातावरणस्य दुष्प्रभावः सद्यः न पतति। तत्र स्थायित्वं भवति । पक्वान्नं एक स्थानात् स्थानान्तरमपि नेतुं शक्यते तत्र न कापि हानिः एतदतिरिक्तमन्नकूटस्यैकः व्यावहारिकः पक्षः । अस्मिन्नवसरे जनाः सम्भूय परस्परं भोज्यपदार्थान् वितीर्य भक्षयन्ति । अतोऽयं भ्रातृभावस्य जनकः। केवलमन्नकूटः स्वकीयां समृद्धां परम्परामेव न स्मारयति अपि तु धार्मिक भावनया सह व्यावहारिकं सौहार्दभावमपि जनयति । धार्मिकदृष्ट्या अन्नकूटस्य माहात्म्यमिदं यत् अनेनोत्सवेन जनेषु समृद्धिभावं वर्धते । गवां कल्याणं भवति पुत्रपौत्रादीनां वृद्धिर्भवति । ये जनाः कार्तिकस्नानं नियमतया संकल्पपूर्वकं कुर्वन्ति यदि ते अन्नकूटोत्सवं न कुर्वन्ति तदा तेषां स्नानजन्य-पुण्यमपि व्यर्थं भवति। अतः धार्मिक दृष्ट्या अस्य महत्वं विशेषेण वर्तते। धर्मक्रियाया निर्वाहेण सहैव स्वदेशीया पाककलायाः संरक्षणम् तथैवावश्यकं वर्तते। अन्यथा वयं सर्वेषां सुस्वादु पदार्थान् विस्मृत्य 'डबलरोटी' संज्ञकपदार्थाश्रितं भवामः । एतादृशा पारम्परिकाः उत्सवाः अस्मान् स्मारयन्ति यत् कीदृशी अस्माकं संस्कृतिरासीत्। इदानीं च वयं कुत्र स्थिता स्मः। अतीतानां स्मरणेन भविष्यत् कालः सुरक्षितो भवति। अतः पारम्परिकोत्सवाः सदैवास्माभिः स्मरणीया इति ।



# भास्करस्य पदलालित्यम्

'दण्डिनः पदलालित्यम् इति सूक्तिस्तु जगत्प्रसिद्धा एव परं शास्त्रान्तरेष्वपि केचन आचार्याः सन्ति येषां रचना प्रायशः गुणग्राहकैस्तिरोहिता। परं तेषां काव्ये लालित्यं सौष्ठवञ्च दरीदृश्यते। कुत्रचिद् रचनायां लालित्यस्य चर्चा स्वयं आचार्यैरेव कृतं यथा— कविवरेण जयदेवेनापि गीतगोविन्दे लिखितम्' —

**''यदि हरिस्मरणे सरसं मनो यदि विलासकलासु कुतूहलम्।**

**मधुरकोमलकान्तपदावलीं शृणु तदा जयदेवसरस्वतीम्।**[1]

तथैव ज्योतिषशास्त्रेऽपि भास्करस्य सरस्वती श्रवणीया मननीया च वर्तते।[2] आचार्यभास्करेणापि स्वकीयरचनायाः लालित्यस्य चर्चा स्वयमेव कृता यथोक्तं लीलावत्याम् 'संक्षिप्ताक्षरकोमलामलपदैर्लालित्यलीलावतीम्'। अन्यच्च 'शुद्धाऽखिलव्यवहृतिः खलु कण्ठसक्ता लीलावतीह सरसोक्तिमुदाहरन्ती।' ललितरचनायाम् आचार्यभास्करस्य स्थानं मूर्ध्नि वर्त्तते। अन्यशास्त्रापेक्षया ज्योतिषशास्त्रे सरसरचना अतीव दुरुहा प्रतिभाति यतो हि तत्र केवलं रूक्षाणामङ्कानां व्यवहारः गणितीयनियमाः, विविधपरिणामानाञ्च विवेचनं वर्तते परं तत्रापि भास्कराचार्येण यादृशी कोमलकान्तपदावली प्रदर्शिता सा नूनं हि श्लाघनीया वर्तते। आचार्यभास्करस्य प्रमुखा कृतिः सिद्धान्तशिरोमणिर्वर्तते। तत्र चत्वारः भागाः सन्ति। प्रथमो भागः लीलावती, द्वितीयः बीजगणितम्, तृतीयः गणिताध्यायः चतुर्थश्च गोलाध्यायः। प्रथमभागे लीलावत्यां[3] व्यक्तगणितम् अङ्कगणितं वा वर्त्तते। तस्य ग्रन्थस्य मंगलाचरणेऽलङ्कारच्छटा दर्शनीया वर्त्तते। यथा—

---

१. गीतगोविन्दम् १

२. लीलावती (चौखम्बा विद्याभवन- २००१) पृ. १

३. लीलावती (चौखम्बा विद्याभवन) पृ. ३५५

**लीलागललुलल्लोलकालव्यालविलासिने।**

**गणेशाय नमो नीलकमलामलकान्तये।।**[1]

अनन्तरं गणितस्य सूत्राणि उदाहरणानि च ललितपदविन्यासैः आचार्येण प्रदत्तानि यैः गणिताध्ययनेन सह काव्याध्ययनस्याप्यानन्दं पाठकाः अनुभवन्ति। अत्र कानिचित् काव्यात्मकानि उदाहरणानि उपस्थाप्यन्ते सर्वप्रथमं गुणनस्योदाहरणम् :—

**बाले बालकुरङ्गलोलनयने लीलावति प्रोच्यतां**

**पञ्चत्र्येकमिता दिवाकरगुणा अङ्काः कति स्युर्यदि।**

**रूपस्थानविभागखण्डगुणने कल्याऽसि कल्याणिनि**

**च्छिन्नास्तेन गुणेन ते च गुणिता जाताः कति स्युर्वद।।**[2]

अत्र केवलं १३५ एवं १२ अनयोरङ्कयोः गुणनम्, प्राप्तगुणनफले गुणकेन भाग एव अभीष्टं वर्त्तते।

एवमेव घनस्योदाहरण् —

**नवघनं त्रिघनस्य घनं तथा कथय पञ्चघनस्य घनं च मे।**

**घनपदं च ततोऽपि घनात् सखे यदि घनेऽस्ति घना भवतो मतिः।।**[3]

इष्टकर्मप्रसङ्गे भ्रमरसमूहात् भिन्नभिन्नस्थानेषु गतानां भ्रमराणां निर्देशपुरस्सरैः सम्पूर्णभ्रमरकुलस्य संख्याज्ञानाय प्रश्नो वर्त्तते—

**पञ्चांशोऽलिकुलात् कदम्बमगमत् त्र्यंशः शिलीन्ध्रं तयो-**

**र्विश्लेषस्त्रिगुणो मृगाक्षि! कुटजं दोलायमानोऽपरः।**

**कान्ते! केतकमालतीपरिमलप्राप्तैककालप्रिया-**

**दूताहूत इतस्ततो भ्रमति खे भृङ्गोऽलिसङ्ख्यां वद।।**[4]

---

१. लीलावती (चौखम्बा विद्याभवन) पृ. ९

२. लीलावती (चौखम्बा विद्याभवन) पृ. १५

३. लीलावती (चौखम्बा विद्याभवन) पृ. ३१

४. लीलावती (चौखम्बा विद्याभवन) पृ. ८०

अर्थात् हे मृगाक्षि! भ्रमरकुलानां पञ्चमांशः (१/५) कदम्बपुष्पमगमत्, तृतीयांशः (१/३) शिलीन्ध्रं प्रति अगमत् अनयोरन्तरस्य त्रिगुणितसंख्याकाः भ्रमराः कुटजं प्रस्थिताः एकः भ्रमरः प्रियारूपयोः केतकीमालतीपुष्पयोः परिमलेन युगपदेवाहूतः कदाचित् केतकीं प्रति कदाचित् मालतीं प्रति गच्छन् दोलायमानो दृष्टस्तदा भ्रमराणां संख्या का?

**यातं हंसकुलस्य मूलदशकं मेघागमे मानसं**
**प्रोड्डीय स्थलपद्मिनीवमगादष्टांशकोऽम्भस्तटात् ।**
**बाले! बाल मृणालशालिनि जले केलिक्रियालालसं**
**दृष्टं हंसयुगत्रयं च सकलां यूथस्य संख्यां वद ।।**[1]

अर्थात् हंसकुलस्य या संख्या तस्य दशगुणितवर्गमूलतुल्यहंसाः मानसरोवरं प्रति गताः तथा च अष्टमांश (१/८) - तुल्याः हंसाः स्थलकमलिनीवनं प्रति गताः। तस्मिन्नेव जलाशये मृणालैः सह सङ्क्रीडमानानां हंसानां युगत्रयी दृष्टा। हे बाले! अस्मिन् हंसकुले हंसानां संख्या का? वद।

द्वितीयम् —

**पार्थः कर्णवधाय मार्गणगणं क्रुद्धो रणे संदधे**
**तस्यार्धेन निवार्य तच्छरगणं मूलैश्चतुर्भिर्हयान् ।**
**शल्यं षड्भिरथेषुभिस्त्रिभिरपिच्छत्रं ध्वजं कार्मुकं**
**चिच्छेदास्य शिरः शरेण कति ते यानर्जुनः संदधे ।।**[2]

क्रुद्धोऽर्जुनः कर्णवधाय शरसमूहं नीत्वा युद्धभूमिं जगाम। सम्पूर्ण-शरस्यार्धेन कर्णेन प्रयुक्तबाणानां निवारणं कृतम्। शरसमूहस्य चतुर्गुणित-वर्गमूलतुल्यशरैरश्वानां वधं कृतवान्, षड्भिः बाणैः शल्यं, त्रिभिर्बाणैः छत्रं, ध्वजं, कार्मुकं तथा चैकेन शरेण कर्णस्य शिरः चिच्छेद तदा सम्पूर्णशराणां संख्या का?

---

१. लीलावती (चौखम्बा विद्याभवन) पृ. ९६
२. लीलावती (चौखम्बा विद्याभवन) पृ. १७

तृतीयम् —

**अलिकुलदलमूलं मालतीं यातमष्टौ**
**निखिलनवमभागाश्चालिनी भृङ्गमेकम्।**
**निशि परिमललुब्धं पद्ममध्ये निरुद्धं**
**प्रति रणति रणन्तं ब्रूहि कान्तेऽलिसंख्याम्।।**[1]

अर्थात् भ्रमरसमूहस्यार्धभागस्य वर्गमूलतुल्यभ्रमराः मालतीपुष्पं प्रतिगताः अष्टगुणितस्य नवमभागाः अर्थात् ८/९ भ्रमराः वनान्तरं गताः एकः भ्रमरः पद्मपरागेण लुब्धः पद्मकोशे एव निरुद्धः तस्य भ्रमरस्य प्रेयसी भ्रमरी रात्रौ तत्रैव पद्मस्योपरि गुञ्जन्ती आसीत् तदा भ्रमराणां संख्या का?

एवमेव क्षेत्रव्यवहारे भुजकोट्योरानयनप्रसङ्गे उदाहरणमेकं वर्त्तते—

**चक्रक्रौञ्चाकुलितसलिले क्वापि दृष्टं तडागे।**
**तोयादूर्ध्वं कमलकलिकाग्रं वितस्तिप्रमाणम्।**
**मन्दं मन्दं चलितमनिलेनाहतं हस्तयुग्मे**
**तस्मिन् मग्नं गणक! कथय क्षिप्रमम्भः प्रमाणम्।।**[2]

अर्थात् — चक्रक्रौञ्चादिपक्षिभिराकुलितसरोवरे जलस्तरात् वितस्तिप्रमाणं यावदूर्ध्वं कमलकलिकाग्रं दृष्टं, मन्दं मन्दं वायुवेगेन शनैः शनैः नम्रीभूय सा कमलकलिका हस्तद्वयान्तरे सलिले निमग्ना। हे गणक! तत्राम्भःप्रमाणं अर्थात् सरोवरस्य गाम्भीर्यं क्षिप्रं वद। एवमेवान्यान्यपि स्थलानि सन्ति यत्र भास्करस्य कवित्वं गणिते प्रावीण्यं च लक्ष्यते।

गणितातिरिक्तम् अन्यत्रापि भास्करस्य काव्यप्रियत्वं पदे-पदे दृश्यते यथा चन्द्रशृङ्गोन्नतिसाधने चन्द्रबिम्बस्वरूपं प्रदर्शयन् भास्करो वक्ति—

**तरणिकिरणसङ्गादेष पीयूषपिण्डो**
**दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति।**
**तदितरदिशि बालाकुन्तलश्यामलश्रीर्घट**
**इव निजमूर्तिच्छाययैवातपस्थः।।**[3]

---

१. लीलावती (चौखम्बा विद्याभवन) पृ. १७
२. लीलावती (कृष्णादास अ.) पृ. ६९
३. लीलावती (कृष्णादास अ.) पृ. १५२

अर्थाच् चन्द्रबिम्बस्य सूर्यसम्मुखो भागः सूर्यकरैः प्रकाशितो भवति सूर्यसापेक्षः चन्द्रस्य पृष्ठभागः अप्रकाशितः कृष्णश्च भवति। यथा बालायाः मुखं प्रकाशितं सुन्दरं तथा च मुखभागात् पृष्ठभागं कृष्णकुन्तलैरावृत्तं कृष्णं दृश्यते। तथैव आतपे स्थितस्य घटस्यापि सूर्यसम्मुखो भागः प्रकाशितोऽपरश्च घटच्छायया एव अप्रकाशितो दृश्यते। एवमेव चन्द्रबिम्बस्यापि सूर्यसम्मुखस्थो भागः प्रकाशितस्तथा अपरभ।गोऽप्रकाशितो भवति।

एवं बहूनि स्थलानि सन्ति यत्र आचार्यभास्करस्य काव्यसौष्ठवं दृश्यते। गोलाध्याये प्रसङ्गमुत्पाद्य स्वीयकवित्वपिपासायाः प्रशमनार्थम् आचार्येण ऋतुवर्णनमपि सिद्धान्तविषयाणां मध्ये सुष्ठु गुम्फितम् । तद्यथा—

**उत्फुल्लन्नवमल्लिकापरिमलभ्रान्तभ्रमद्भ्रामरे**

**रे पान्था! कथमव्यथानि भवतां चेतांसि चैत्रोत्सवे।**

**मन्दान्दोलितचूतनूतनघनस्फारस्फुरत्पल्लवै-**

**रुद्वेलन्नववल्लरीष्विति लपन्त्युच्चैः कलं कोकिलाः।।१**

**स्वकुसुमैर्मलिनामिव मालतीमवहसन्ति वसन्तजमल्लिकाः।**
**उपवनं विनिवारयतीव ताः किसलयैर्मलयानिलकम्पितैः।।२**
**विहाय सौधं तृणकुड्यमण्डपे प्रसिच्यमाने सलिलैः समन्ततः ।**
**शुचौ रमन्ते विरलं विलासिनः प्रियाजनैः सीकरसेचनोन्मुखाः।।३**
**निदाघदाहार्तिभिधातहेतवे वनाय कामोच्छ्रितचूतकेतवे ।**
**व्रजन्ति वापीजलकेलिलालसाः शुचौ रतिस्वेदगलज्जलालसाः।।४**
**मदनदहनखिन्नामागतेऽप्येत्य काले**
**परिमलबहलानां मालतीनां नदीनाम् ।**
**अदय दयित सिञ्चस्याऽऽत्मदृग्वारिणा किं**
**परिमलबहलानां मा लतीनां न दीनाम् ।।५**
**उच्चैर्विरौति हि मयूरकुलं यदम्ब मन्दं कदम्बमकरन्दविमिश्रितश्च।**
वातः प्रवाति पतिरेति न तेन मन्ये निर्घ्राणनिर्घृणविकर्णविहत्त्वमस्य।।६

**एवं विधं विरहिणी विरहेण खिन्ना भिन्नाञ्जनच्छविघने गगने घनतौं ।**
**मत्वा प्रियं तमदयं हृदयं प्रविष्टं ब्रूते सपेशलमलं परिहासमिश्रम् ।।७**

**स्वतनुजवनराज्या पुष्पवत्या श्लिषन्त्या**
**ह्यनुचितकृतसङ्गोऽस्मीति शैलोऽनुतप्तः ।**
**निशि शशिकरचञ्चन्निर्झरैरश्रुकल्पैः**
**शरदि हृदिजखेदस्वेदवान् रोदितीव ।।८**

**सहस्यकाले बहुशस्यशालिनीं चितामवश्यायकमौक्तिकोत्करैः ।**
**प्रहृष्टपुष्टाखिलगोकुलामिलां विलोक्य हृष्यन्त्यधिकं कृषीवला; ।।९**

**अरुणनीलनिमीलितपल्लवं प्रचुरफुल्लसमुल्लसनैः श्रियम् ।**
**वहति कांचन काञ्चनकाननं नवतरां नितरां शिशिरागमे ।।१०**

**अपटुतिग्मरीचिमरीचिभिर्न हि तथा शिशिरे शिशिरक्षतिः ।**
**निशि यथोष्मलपीनघनस्तनीभुजनिपीडनतः स्वपतां नृणाम् ।।११**

**ऋतुव्यावर्णनव्याजादीषदेषा प्रदर्शिता ।**
**कविता तद्विदां प्रीत्यै रसिकानां मनोहरा ।।१२**

अनेन ऋतुवर्णनेनेदं प्रतिभाति यत् आचार्यः महान् कविरासीत् परं काव्यरचनायाः अवसर एव तैर्न लब्धः। यतो हि तेषां समक्षं सततं गणितीयाः विषयाः एव सम्यक् समाधानार्थं समुपस्थिताः आसन्। अतः गणितीय विषयेष्वेव स्वकीय काव्यप्रतिभायाः प्रकाशस्तैः कृतः, येन काव्यस्य गणितस्य चाद्भुतं साहचर्यं भास्करस्य कृतिषु दृश्यते। गणितक्षेत्रेऽपि केचन नवीनाः सिद्धान्ता; तैः प्रतिपादिताः। सिद्धान्तेऽपि भुवः आकर्षणशक्तेः उदयान्तरस्य, ज्योत्पत्यादीनाञ्च नूतनाः आविष्काराः परिष्काराश्च तैः स्थापिताः। नूनं हि भास्कराचार्यः ज्योतिषजगति अद्यापि भास्करायमानस्तिष्ठति।



---

१. लीलावती (चौखम्बा विद्याभवन) पृ. १९६

२. सिद्धान्त शिरोमणि गो. अ. शृंगी १

३. सि. शि. गो. अ. ऋतु १-१२

# ज्यौतिष की वेदाङ्गता

किसी भी वस्तु के स्वरूप को जिन अवयवों या उपकरणों के माध्यम से जाना जाता है। उसे अङ्ग कहते हैं। 'अङ्ग शब्द का व्युत्पत्तिलभ्य अर्थ भी यही है— अंग्यन्ते ज्ञायन्ते अमीभिरिति अङ्गानि'

शब्दशास्त्र, ज्यौतिष, निरुक्त, कल्प, शिक्षा तथा छन्द इन छः शास्त्रों द्वारा वेद का सम्यग् ज्ञान सम्भव होता है। अतः छः शास्त्रों को वेदाङ्ग कहा गया है। यद्यपि इन शास्त्रों को वेदांङ्ग सिद्ध करने की आवश्यकता नहीं है ये स्वतः सिद्ध वेद के अङ्ग हैं, फिर भी कुछ ऐसे तथ्यों को प्रस्तुत करने का प्रयास कर रहा हूँ जो ज्योतिष शास्त्र की वेदाङ्गता के स्वयं प्रमाण हैं।

प्राचीन काल से आज तक वेदों की जितनी प्रकार की व्याख्याएँ हुई हैं उनसे स्पष्ट होता है कि वेद को मुख्य दो धाराओं में अबतक जाना गया है। प्रथम धारा वेद की यज्ञपरक व्याख्या करती है। यज्ञ ही वेद का मुख्य प्रतिपाद्य है जैसा कि आचार्य लगध ने वेदाङ्ग ज्योतिष में लिखा है—

"वेदा हि यज्ञार्थमभिप्रवृत्ताः
काला हि पूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं
यो ज्योतिषं वेद स वेद यज्ञान् ।।[१]"

वेदों में यज्ञ के जो महत्व बतलाए गए हैं वे वेदविहित समय में ही करने पर फलीभूत होते हैं अन्यथा वे निष्फल या विपरीत फलदायक हो जाते हैं। श्रुति कहती है—

ते असुरा अयज्ञा अदक्षिणा अनक्षत्रा
यच्च किञ्चाकुर्वत तां कृत्यामेवाकुर्वत ।।

---

१. वेदाङ्गज्यौतिष

अर्थात् उपयुक्त नक्षत्र एवं उपयुक्त काल के अभाव में किया गया 'यज्ञ' कृत्या को समर्पित हो जाता है न कि देवताओं को। अत: यज्ञानुरूप काल का चयन यज्ञ से पूर्व आवश्यक होता है। प्राय: कार्यानुरूप काल का निर्देश भी स्थान-स्थान पर किया गया है। यथा— अग्न्याधान प्रसङ्ग में कहा गया है—

वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्य आदधीत"[१] इत्यादि।

इसी प्रकार दीक्षा ग्रहण करने हेतु काल का निर्देश हैं—

"एकाष्टम्यां दीक्षेरन्

फल्गुनी पूर्णमासे दीक्षेरन् ।।[२]

इससे स्पष्ट है कि यज्ञ से पूर्व के उपक्रम भी उचित काल में ही सम्पन्न होने चाहिए। आचार्यलगध ने पग-पग पर तिथि नक्षत्र, ऋतु एवं आयन आदि की आवश्यकता को देखते हुए काल का प्रतिपादन किया है। कालज्ञान को सर्वाधिक महत्व देते हुये आर्च ज्योतिष में काल की वन्दना की गई है।

प्रणम्य शिरसा कालमभिवाद्य सरस्वतीम्।

कालज्ञानं प्रवक्ष्यामि लगधस्य महात्मन: ।।[३]

ऋग्वेद से लेकर ब्राह्मण आरण्यक तक ज्योतिष शास्त्र का विवेचन इस बात का परिचायक है कि यज्ञ के साथ-साथ ज्योतिष शास्त्र भी वेद का प्रतिपाद्य विषय है। अन्यथा संवत्सर से लेकर तिथि तक का उल्लेख वेदों में नहीं होता। इन्हीं आधारों पर ज्योतिष शास्त्र के प्रख्यात आचार्य भास्कर ने ज्योतिष शास्त्र के महत्व को प्रतिपादित करते हुए कहा है—

---

१. तै. ब्रा १।९

२. ताण्ड्य ब्राह्मण ५।९।१७, तै. सं. ७।४।८

३. आर्च ज्यौतिष (ऋग्वेद ज्योतिष)

वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण।
शास्त्रादस्मात् कालबोधो यतः स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात् ।।[१]

इतना ही नहीं भास्कर ने वेद पुरूष के सभी अङ्गों का उल्लेख करते हुए ज्यौतिष शास्त्र को वेद का नेत्र बतलाया है।

शब्दशास्त्र वेद का मुख है, ज्यौतिषनेत्र, निरुक्त कर्ण, कल्प दोनों हस्त, शिक्षा नासिका, तथा छन्द वेद पुरूष के दोनों पैर हैं।[२]

इन अङ्गो में नेत्रों को विशेष महत्व दिया गया है इसी कारण ज्यौतिष शास्त्र को शीर्षस्थ माना गया है। ''तद्वद् वेदाङ्गशास्त्राणां ज्यौतिषं मूर्घ्नि स्थितम् ।।'' वेदों की यज्ञपरक व्याख्या के अनुसार ज्यौतिष शास्त्र की वेदाङ्गता उक्त तथ्यों के आधार पर स्वयं सिद्ध है।

अब हम वेदों की व्याख्या की दूसरी धारा को लेते हैं जिसके अन्तर्गत हमारी जीवन पद्धति से जुड़ी हुई ऐतिहासिक एवं वैज्ञानिक व्याख्या की गई है। इस धारा के अन्तर्गत सृष्टि प्रक्रिया से लेकर मानव जीवन पद्धति तक का सूक्ष्म विवेचन किया गया है। हम यहां केवल उन्हीं अंशों का उल्लेख करते हैं जिसका सीधा सम्बन्ध ज्यौतिष शास्त्र से है। ब्रह्माण्ड की उत्पत्ति का उल्लेख करते हुए सूर्यसिद्धान्त कहता है—

वासुदेवः परं ब्रह्म तन्मूर्तिः पुरुषः परः
अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः।
प्रकृत्यन्तर्गतो देवः बहिरन्तश्च सर्वगः
संकर्षणोऽपः सृष्ट्यादौ तासु वीर्यमवासृजत्।।
तदण्डमभवद् हैमं सर्वत्र तमसावृतम्।
तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः।।
हिरण्यगर्भो भगवानेष छन्दसि पठ्यते।।[३]

---

१. सि. शि० ९

२. शब्दशास्त्रं मुखं ज्योतिषं चक्षुषी श्रोत्रमुक्तं निरुक्तञ्च कल्पः करौ।
यातु शिक्षाऽस्य वेदस्य सा नासिका पादपद्मद्वयं छन्द आद्यैर्बुधैः ।।
सि. शि. ९०

३. सू. सि. १२.१२-१४

इस प्रकार हिरण्यागर्भ भगवान ने अहंकार मूर्ति ब्रह्मा के द्वारा सृष्टि का आरम्भ कराया। ब्रह्मा के मन से चन्द्रमा और नेत्रों से तेज स्वरूप सूर्य की उत्पत्ति हुई। तदनन्तर मन से आकाश, आकाश से वायु, वायु से अग्नि, अग्नि से जल तथा जल से पृथ्वी की उत्पत्ति हुई है।

आचार्य भास्कर ने सांख्यमत को प्रतिपादित करते हुए कहा—

यस्मात् क्षुब्ध प्रकृतिपुरुषाभ्यां महानस्य गर्भे
अहंकारोऽभूत खकशिखिजलोर्व्यस्ततः संहतेश्च
ब्रह्माण्डं यज्जठरगमहीपृष्ठनिष्ठाद् विरञ्चे-
र्विश्वं शश्वज्जयति परमं ब्रह्म तत्तत्वमाद्यम्।।[१]

अर्थात् प्रकृति और पुरुष के संघर्ष से महान् की उत्पत्ति हुई, महान से अहंकार तथा अहंकार से क्रमशः आकाश, वायु, अग्नि-जल एवं पृथ्वी की उत्पत्ति हुई।

इन दोनों सिद्धान्तों का मूल वेद ही है। ऋक् संहिता का मन्त्र ऋतं च सत्यं चाभीद्धातपसोऽध्यजायत[२] इत्यादि। तैत्तरीय ब्राह्मण का मन्त्र "आपो वा इदमग्रे सलिलमासीत्।[३] इत्यादि तथा "नासदासीन्नोसदासीत्तदानीम् नासीद्रजो नो व्योमा परो यत्"[४] इत्यादि मन्त्र भी उसी सृष्टि प्रक्रिया को प्रतिपादित करते हैं।

इसी प्रकार पर्जन्य विद्या, सौरमण्डल, अन्तरिक्ष, भूगोल आदि का विस्तृत वर्णन तथा सूर्य चन्द्रमा की गति से सम्बन्धित तिथि एवं नक्षत्रों का विवेचन स्पष्ट रूप से ज्योतिषशास्त्र का ही प्रतिपाद्य है। वेदों में इनका महत्वपूर्ण स्थान ज्योतिषशास्त्र की महत्ता को व्यक्त करने के साथ-साथ वेद के

---

१. सि. शि. गो.

२. ऋ. स. १०।१९०

३. तै. ब्रा. १।१।३

४. तै. ब्रा. २।८।९

साथ अभिन्नता का भी परिचायक है। वैदिक काल में ही समस्त आकाशीय पिण्डों की पारस्परिक भिन्नता ज्ञात थी। भूमि पर स्थित प्राणी आकाश में प्रकाशमान पिण्डों को एक समान ही देखता है किन्तु वास्तविकता यह नहीं है। समस्त प्रकाशमान पिण्डों में कुछ स्वयं प्रकाशित हैं तथा कुछ सूर्य से प्रकाशित हैं। स्वयं प्रकाशमान पिण्ड तारा एवं नक्षत्र वाचक हैं तथा सूर्य के प्रकाश से प्रकाशित पिण्ड ग्रह एवं उपग्रह संज्ञक हैं। तारों में भी चन्द्र पथ या सौर पथ में आने वाले, तारे नक्षत्र संज्ञक है तथा उनसे भिन्न स्थिति में रहने वाले तारे 'तारा' संज्ञक हैं। वेदों में तारक मण्डल या तारा को 'ऋक्ष' शब्द से व्यवहृत किया गया है।

''अमीय ऋक्षा निहिता स उच्चा''

सदैव उत्तर दिशा में दिखाई देने वाले सात तारों के समूह को ऋक्ष मण्डल कहा गया है जिसे हम सप्तर्षि मण्डल कहते हैं। ऋक्ष शब्द का अर्थ 'भालू' होता है सम्भवत: ऋक्ष शब्द का 'भालू' अर्थ लेकर ही पाश्चात्यों ने बृहद सप्तर्षि मण्डल को Great bear तथा लघु सप्तर्षि मण्डल को Small bear नाम से सम्बोधित किया है। वर्तमान समय में भी ज्योतिषशास्त्र में ऋक्ष शब्द नक्षत्रों के लिए प्रयुक्त हो रहा है।

लघु सप्तर्षि मण्डल को पुराणों में शिंशुमार कहा गया है। शिंशुमार के पुच्छ में स्थित तारा 'ध्रुव' संज्ञक है। किन्तु यह स्थिर नहीं है। ध्रुव के सन्दर्भ में वैज्ञानिक भी लम्बे समय तक भ्रम में थे वे भी इसे स्थिर समझते थे। किन्तु पुराणों ने स्पष्ट शब्दों में कहा है—

योऽसौ चतुर्दिशं पुच्छे शिंशुमारे व्यवस्थित:।
उत्तानपादपुत्रो ऽसौ मेढीभूतो ध्रुवो दिवि।
स हि भ्रमन् भ्रामयते चन्द्रादित्यै: ग्रहै: सह।
भ्रमन्तमुपगच्छन्ति नक्षत्राणि च चक्रवत्।।[१]

---

१. वायुपुराण ९।५।६-७

अर्थात् ध्रुव तारा शिंशुमार चक्र समस्त ग्रहमण्डल को भ्रमण कराता हुआ स्वयं भी भ्रमण करता है। प्रख्यात दैवज्ञ कमलाकर भट्टने भी कठोर शब्दों में कहा है—

ध्रुवतारां स्थिरां ग्रन्थे मन्यन्ते ते कुबुद्धय: ।।[१]

नक्षत्रों के सम्बन्ध में भी वेद और ज्योतिष में अभेद सम्बन्ध है। आज भी नक्षत्रों के वही नाम प्रचलित है जो वैदिक काल में थे। अन्तर इतना ही है कि वैदिक काल में नक्षत्रों की गणना कृत्तिका से, वेदाङ्गज्योतिष काल में धनिष्ठा से तथा आज अश्विनी से गणना प्रारम्भ होती है। दूसरा अन्तर यह है कि वेदों में क्रम से नक्षत्रों के नाम नहीं दिए गए हैं। संकेताक्षर द्वारा सभी नक्षत्रों का उल्लेख है। यथा—

जौ द्राघ: खेश्वेहीरोषाचिन्मूषण्य: इत्यादि

यहां जौ अर्थात् अश्वयुजौ (अश्विनी), द्रा= आर्द्रा इसी प्रकार नक्षत्रों का नाम ज्ञात हो पाता है। कहीं-कहीं तिष्य -भग- फल्गुनी नामों से भी व्यक्त किया गया है।

न केवल क्रान्तिवृत्त का सम्यग् ज्ञान उपलब्ध होता है अपितु नाडी वृत्तीय कालज्ञान भी पूर्णरूपेण व्यवहार में था। यद्यपि काल का विवेचन सभी वेदों में है। किन्तु अथर्ववेद में काल के सूक्ष्मतम अंश का उल्लेख है। अथर्व ज्यौतिष से ज्ञात होता है कि उस समय वर्ष मान ३६६ दिनों का माना गया था, तथा मासों के नाम दो प्रकार से प्रचलित थे। कहीं-कहीं पर "मधुश्च माधवश्चैव शुक्रश्च शुचि रेव च" इत्यादि क्रमानुसार चैत्रादि मासों के नाम कहे गए हैं जो अपेक्षाकृत अधिक व्यवहार में थे। दूसरी विधि का उल्लेख तैत्तरीय ब्राह्मण में इस प्रकार है—

१. अरुण (चैत्र)
२. अरुणज (वैशाख)
३. पुण्डरीक (ज्येष्ठ)
४. विश्वजित् (आषाढ़)

१. सिद्धान्त तत्त्वविवेक

| | |
|---|---|
| ५. अभिजित् (श्रावण) | ९. रसवान् (मार्गशीर्ष) |
| ६. आर्द्र (भाद्रपद) | १०. इरावान (पौष) |
| ७. पिन्वमान (आश्विन) | ११. सर्वोषध (फाल्गुन) |
| ८. अन्तवान (कार्तिक) | १२. सम्भर (फाल्गुन) |

इतना ही नहीं काल के सूक्ष्म निरूपण प्रसङ्ग में एक सेकेण्ड से भी छोटी इकाइयों की भी कल्पना वैदिक साहित्य में उपलब्ध है जो वैदिक काल के गहन अनुसन्धान की ओर इंगित करती है। आधुनिक कालमान घण्टा मिनिट-सेकेण्ड के साथ तुलनात्मक मान निम्नलिखित सारणि से स्पष्ट है। अथर्ववेद में सबसे छोटी कालमान की इकाई निमेष है जिसे सेकेण्ड में परिवर्तन करने से ०.००८ सेकेण्ड के तुल्य होता है। शेष इस प्रकार—

| **वैदिक कालमान** | | **वर्तमान कालमान** |
|---|---|---|
| १२ निमेष = १ लव | = | ०.१०६ सेकेण्ड |
| ३० लव = १ कला | = | ३.२ सेकेण्ड |
| ३० कला = १ त्रुटि | = | १.६ मिनिट |
| ३० त्रुटि = १ मुहूर्त्त | = | ४८ मिनिट |
| ३० मुहूर्त्त = १ अहोरात्र | = | २४ घण्टा |

इस प्रकार की सूक्ष्म कालगणना का इतिहास किसी भी प्राचीन संस्कृति के इतिहास में दृष्टिगत नहीं हुआ है। जब हम गणितीय दृष्टि से विचार करते हैं तो आज की विवादास्पद स्थिति भी सुलझ जाती है। आधुनिक इतिहासकारों का अनुमान है कि रेखागणित का उद्भव भारत में नहीं हुआ है। यह सिद्धान्त मिस्र से भारत आया है किन्तु यह धारणा नितान्त भ्रामक है। आपस्तम्ब और बौधायन शुल्बसूत्र इसके साक्षी हैं। शुल्ब का अर्थ रज्जु होता है। रज्जु रेखा की प्रतीक है। रस्सी से ही मापकर वेदी और यज्ञ कुण्डों हेतु क्षेत्र विन्यास किया

जाता था। यज्ञवेदी और कुण्डों के आकार, चतुर्भुज, वृत्त एवं त्रिकोण आदि विभिन्न स्वरूपों में होते हैं। इनकी निर्माण विधि का विस्तृत विवेचन स्पष्ट रूप से रेखागणित के सिद्धान्तों का ही प्रतिपादन करते हैं। आपस्तम्ब शुल्ब सूत्र के प्रथम पटलके ३ अध्यायों में शुद्ध रूप से रेखागणित का ही प्रतिपादन है। इनमें वृत्त और उनके परिधि-व्यास आदि अवयवों एवं उनके परस्पर सम्बन्धों का भी उल्लेख है। अत: रेखागणित का भी मूल वेद में होने से इसकी भी भारतीयता सिद्ध हो जाती है।

रेखागणित के अत्यन्त समीपवर्ती छाया गणित है, जिसके अन्तर्गत छाया से समय ज्ञान की प्रक्रिया प्रतिपादित है। वस्तुत: यह सिद्धान्त वेध प्रक्रिया का प्रथम चरण है जो वैदिक काल में ही आरम्भ हो गया था। दिन में १५ मुहूर्तों की कल्पना उस समय भी प्रचलित थी किन्तु उस समय के मुहूर्तों के नाम भिन्न थे। उन मुहूर्तों का ज्ञान छाया वेध द्वारा होता था। १२ अंगुल शंकु की छाया द्वारा मुहूर्तों का निर्धारण होता था। मूलत: मुहूर्तों की संख्या ८ है। आठवां अभिजित् मुहूर्त स्थिर होता है शेष रौद्र आदि सात मुहूर्त सूर्योदय से क्रमानुसार आरम्भ होकर अभिजित पर्यन्त जाते हैं। पुन: अभिजित के बाद उत्क्रम से सूर्यास्त के समय रौद्र तक जाते हैं। छाया के ह्रास एवं वृद्धि के अनुसार मुहूर्तों का निर्धारण होता है। जो निम्नलिखित सारिणि से स्पष्ट है—

| **छायामान** | | **मुहूर्त** | **संख्या** |
|---|---|---|---|
| ∞ — ९६ | अंगुल तक | रौद्र | (१) |
| ९६ — ६० | ” ” | श्वेत | (२) |
| ६० — १२ | ” ” | मैत्र | (३) |
| १२ — ६ | ” ” | सारभट | (४) |
| ६ — ५ | ” ” | सावित्र | (५) |
| ५ — ४ | ” ” | वैराज | (६) |
| ४ — ३ | ” ” | विश्वावसु | (७) |
| स्थिर ३ — ३ | ” ” | अभिजित् | (८) |
| ३ — ४ | ” ” | विश्वावसु | (९) |
| ४ — ५ | ” ” | वैराज | (१०) |

| | | | |
|---|---|---|---|
| ५ — ६ | ,, ,, | सावित्र | (११) |
| ६ — १२ | ,, ,, | सारभट | (१२) |
| १२ — ६० | ,, ,, | मैत्र | (१३) |
| ६० — ९६ | ,, ,, | श्वेत | (१४) |
| ९६ — ∞ | ,, ,, | रौद्र | (१५) |

इसी प्रकार रात्रि में भी पन्द्रह मुहूर्त होते है किन्तु उनका साधन कठिनाई से होगा।

इनके अतिरिक्त " पर्जन्य विद्या ", जिसका विवेचन ज्यौतिष शास्त्र के संहिता स्कन्ध में किया गया है, का विभिन्न प्रकार का उल्लेख है। इन्द्र और वृत्त की कथा पूर्णरूप से पर्जन्य विद्या का ही प्रतिपादन करती है। श्री लोकमान्य तिलक ने 'इन्द्र' को सूर्य तथा वृत्त को हिम का प्रतीक माना है। इन्द्र और वृत्त के युद्ध को तिलक ने ध्रुव प्रदेशीय विप्लव बतलाया है। यास्क ने भी वृत्त को मेघ मानकर ही व्याख्या की है। वैदिक देवताओं में सूर्य का महत्वपूर्ण स्थान है। सूर्य ही ज्यौतिष शास्त्र के नियामक देवता है। सूर्य की सुषुम्ना रश्मि का सोम से प्रगाढ़ सम्बन्ध बतलाया है। सोमलता चन्द्रमा की कला के अनुसार बढ़ती है तथा कला के अनुसार घटती है। इसका यह भी अभिप्राय है कि सूर्य की सुषुम्ना नामक रश्मि चन्द्रमा को तथा सोमलता दोनों को ही विकसित करती है। सूर्य की प्रमुख सात रश्मियाँ भिन्न-भिन्न गुणों से युक्त है। एक-एक रश्मि एक-एक ग्रह को प्रभावित करती है। यथा—

सूर्य की सुषुम्ना नामक रश्मि चन्द्रमा को

| | |
|---|---|
| हरिकेश ,, ,, | नक्षत्रों को |
| विश्वकर्मा ,, ,, | बुध ,, |
| विश्वव्यचा ,, ,, | शुक्र ,, |
| संयद्वसु ,, ,, | भौम ,, |
| अर्वावसु ,, ,, | गुरू ,, |
| स्वराट् ,, ,, | शनि को प्रभावित करती हैं। |

इन्ही सात रश्मियों के कारण सूर्य को सप्त रश्मि कहा जाता है। इन्हीं रश्मियों का

विश्लेषण कर आधुनिक वैज्ञानिकों ने इनके रंगों के आधार पर BIVGYOR (Blue, Indigo, Voilet, Green, Yellow, Orange and Red) नाम से विभक्त किया है। यह स्थूल विवेचन है। सूक्ष्म विवेचन में सूर्य की संज्ञा सहस्र-रश्मि हो जाती है। सूर्य की प्रत्येक रश्मियों में उक्त सात रश्मियाँ होती है। तथा प्रत्येक रश्मियों में सहस्र उप रश्मियाँ होती है। प्रत्येक रश्मि के गुण एवं कार्य भिन्न-भिन्न होते है।

इन सभी आधारों को देखते हुए तथा ज्यौतिष शास्त्र के ऐतिहासिक तथ्यों को ध्यान में रखते हुए इसे वेद से भिन्न मानने के लिए स्थान ही नहीं रहता। अत: ज्यौतिष शास्त्र की सर्वाङ्गीण वेदाङ्गता स्वत: सिद्ध हो जाती है। इसके लिए स्वयं वेद ही प्रमाण हैं। प्रमाणान्तर की आवश्यकता ही नहीं है। आचार्य भास्कर की उक्ति "वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात्" सर्वथा सिद्ध है।



# काल की अवधारणा

काल अनन्त और अनादि होने के कारण अनिर्वचनीय है। इसे किसी एक परिभाषा में आबद्ध कर देना अत्यन्त सरल नहीं है। पुराणों में काल को सृष्टिकर्त्ता तथा संहर्त्ता दोनों ही माना गया है। ''कालः सृजति भूतानि कालः संहरते प्रजाः।'' कहीं-कहीं काल को अन्तकृत या संहर्त्ता ही कहा गया है यथा —कालो जगद्भक्षकः। कुछ सूक्तियाँ भी इसी को व्यक्त करती हैं—''कालो न यातो वयमेव याता।'' भगवान भास्कर ने भी काल का निरूपण करते हुये कहा है—

लोकानामन्तकृत कालः कालोऽन्यः कलनात्मकः।

स द्विधा स्थूल सूक्ष्मत्वान् मूर्त्तश्चामूर्त्त उच्यते।।

(सूर्यसिद्धान्तः १.१०)

यहाँ भी काल के दो भेद बताये गये हैं तथा एक भेद को अन्तकृत् लोक का नाश करने वाला तथा दूसरे भेद को कलनात्मक कहा गया है। कलनात्मक काल भी मूर्त्त और अमूर्त भेद से दो प्रकार का है। जो व्यवहार योग्य काल है उसे स्थूल अथवा मूर्त्त कहते हैं। तथा जो व्यवहार योग्य नहीं हैं उसे सूक्ष्म और अमूर्त्त कहते हैं। यदि इन दोनों भेदों को गणितीय आधार पर देखें तो ये दोनों भेद दो अवस्थाओं के भेद है न कि काल भेद। ये भेद काल की दो भिन्न अवस्थाओं को व्यक्त करते हैं। मूलतः दोनों ही कलानात्मककाल हैं। कोई भी सृष्टि किसी न किसी कालखण्ड में होती है। जिसकी सृष्टि होती है उसका लय भी होता है। इस शाश्वत सिद्धान्त के अनुसार उस सृष्टि के आरम्भ से उसके लय पर्यन्त की कालावधि भी काल की एक मापक ईकाई होती है। इस इकाई का अवसान लय के साथ होता है इसलिए इसे अन्तकृत् काल कहा जाता है। इसी प्रकार जो इकाई सृष्ट्यारम्भ काल से सृष्ट्यन्त काल के मध्यगत कालावधि की गणना करती हैं उन सूक्ष्म और स्थूल इकाइयों को कलनात्मक

काल कहा गया है। चूँकि इसी कालावधि में सूक्ष्म और स्थूल इकाइयों का उपयोग होता है। अतः इसी कलनात्मक काल के दो भेद मूर्त्त और अमूर्त्त संज्ञक कहे गये हैं। गणितीय दृष्टि से सृष्टि एक प्रक्रिया हैं सृष्ट्यन्त या प्रलय एक कालावधि या काल की एक इकाई है जिसे हम कल्प कहते हैं। कल्पान्त में ब्रह्मा समस्त सृष्टि को समेट कर विश्राम करते हैं। कल्प ब्रह्म का एकदिन होता तथा एक कल्प तुल्य उनकी रात्रि होती है। पुनः ब्रह्मा का दिवसारम्भ होता है, उसी के साथ-साथ सृष्ट्यारम्भ भी होता है। सृष्टि क्रम पूर्ववत ही रहता है। जैसा कि श्रुति कहती है— "सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत।" सृष्टि की रचना में ब्रह्मा को ४७४०० दिव्यवर्ष का समय लगता है। ["कृताद्रिवेदा दिव्याब्दा शतघ्नो वेधसो गताः]। अतः सृष्ट्यन्त और कल्पान्त दोनों ही काल की एक महत्तम इकाई के पर्याय है। इसी प्रकार स्थूल काल की लघुतम इकाई 'प्राण' तथा सूक्ष्म काल की लघु इकाई त्रुटि कही गई है।

गणना हेतु ज्योतिषशास्त्र में काल के नवभेद बताये गये हैं। जो इस प्रकार हैं—

ब्राह्मं दिव्यं तथा पैत्र्यं प्राजापत्यं च गौरवम्।

सौरञ्च सावनं चान्द्रमार्क्षं मानानि वै नव।। सू. सि. १४.१

अर्थात् १. ब्राह्म, २. दिव्य ३. पैत्र्य, ४. प्राजापत्य, ५. गौरव, (गुरु सम्बन्धी) ६. सौर, ७. सावन ८. चान्द्र तथा ९. नाक्षत्र ये नव मान कहे गये हैं। यद्यपि ये मान कालभेद के रूप में कहे गये हैं। किन्तु ये सभी मान मात्र मापक हैं। इन्हें कालमापक इकाइयों का भेद मानना चाहिये। जैसे किसी दीवार को मापने के लिए हम अंगुल और हस्त का भी प्रयोग कर सकते हैं। इञ्च और फुट का अथवा सेन्टीमीटर और मीटर का भी प्रयोग कर सकते हैं। माप्य दीवार एक ही है तथा मापक उपकरण भिन्न-भिन्न हैं। इसी प्रकार काल एक ही अनादि-अनन्त है। उसे मापने के लिए हम कभी सूर्य, कभी चन्द्र, कभी बृहस्पति आदि का उपयोग करते हैं। आचार्य भास्कर ने भी सिद्धान्त लक्षण में कहा है— त्र्युट्यादि प्रलयान्तकालकलना मानः प्रभेदः क्रमात्" त्रुटि से आरम्भ कर प्रलयान्त काल तक काल गणना तथा उनके मानों अर्थात् मापकों के भेदों का विवेचन सिद्धान्त मे किया जाता है।

काल की गति के विषय में मतान्तर मिलते हैं। कुछ विद्वानों का मत है कि काल सीधी रेखा में गतिशील रहता है। कुछ विद्वानों का मत है कि काल भी चक्र भ्रमण करता है। इसीलिए इसे कालचक्र भी कहा जाता है। नेपाल और तिब्बत में "कालचक्रज्योतिष" नाम से ज्योतिष की एक प्रमुख विधा है। साहित्यकारों ने काल के चक्र भ्रमण को इंगित करते हुये लिखा है—

"चक्रारपंक्तिरिव गच्छति भाग्यपंक्तिः।"

आजकल भी एक प्रसिद्ध उक्ति है "इतिहास सदैव अपने आप को दुहराता है।" ये मात्र सूक्तियाँ ही नहीं है। इनके मूल में कुछ महत्वपूर्ण अनुभव भी होते हैं।

आचार्य पराशर ने भी दशाओं के वर्णन में एक कालचक्र दशा का उल्लेख किया है।

यदि हम ब्रह्माण्ड के स्वरूप पर ध्यान दें तो समस्त ब्रह्माण्ड ही चक्रभ्रमण करता हुआ प्रतीत होगा। यदि ब्रह्माण्ड के शब्दार्थ को लिया जाय तो अनेक गुत्थियाँ स्वतः ही सुलझ जाती है। ब्रह्म+अण्ड, अर्थात् ब्रह्म द्वारा निर्मित अण्ड जिसमें समस्त सौर मण्डल एवं नक्षत्रादि है। तथा उसकी परिधि अण्डाकार (दीर्घ वृत्तानुकारी) है। इसी अण्डाकार परिधि के अन्दर ग्रहादिकों की दीर्घवृत्ताकार कक्षायें है तथा इसी अण्डाकार परिधिमें कालचक्र भी भ्रमण करता है। ऐसी स्थिति में काल की गति एक सीधी रेखा में मानना युक्ति संगत नहीं प्रतीत होता। आकाश मण्डल में स्थित इकाइयों के चक्रभ्रमण को भगवान् व्यास ने स्पष्ट शब्दों में प्रतिपादित किया है।

उत्तानपादपुत्रोऽसौ मेढीभूतो ध्रुवो दिवि
स हि भ्रमन् भ्रामयते नित्यं चन्द्रादित्यौ ग्रहैः सह।।

अर्थात् ध्रुव शिंशुमार चक्र में अवस्थित रहते हुये सूर्य-चन्द्र सहित समस्त नक्षत्रचक्र को घुमाता हुआ स्वयं भी घूमता है। आज का विज्ञान भी

स्वीकार करता है कि आकाशस्थ सभी पिण्ड भ्रमण कर रहे हैं। जहाँ तक सीधी रेखा में गतिशील होने का प्रश्न है वह किसी नियत काल या नियत दूरी तक तो सम्भव है अनन्तकाल और अनन्त दूरी तक सम्भव नहीं है। पृथ्वी को भी हम सीधी रेखा में देखते हैं। जब कि हम जानते हैं पृथ्वी गोल है। परन्तु हम पृथ्वी के गोलत्व को नहीं देख पाते। हम कही भी जायेगे पृथ्वी हमे समान सीधी, समतल सरल रेखा में ही दिखलाई पड़ेगी। इस रहस्य को गणित का यह सिद्धान्त सुलझाता है— "परिधेः षण्नवत्यंशो दण्डवत् परिदृश्यते।" अर्थात् परिधि का ९६वाँ भाग दण्डवत (दण्ड के समान) सीधी रेखा में दिखाई पड़ता है। हमारी दृष्टि ९६वें भाग से भी बहुत न्यून भाग को देख पाती हैं। इसी लिए पृथ्वी हमे सीधी सरल रेखा में दिखलाई पड़ती है। इसी प्रकार काल का भी कुछ दूरी तक एक सीधी रेखा में जाते हुये प्रतीत होना स्वाभाविक है।

मनुष्य की भी एक सीमा है उससे अधिक वह तो न जा सकता है न देख सकता है। पृथ्वी के वायुमण्डल से बाहर जाने पर पृथ्वी का स्वरूप दिव्य नेत्रों से अथवा सक्षम उपकरणों से देखा जा सकता है, किन्तु अपने चर्म चक्षुओं से वायुमण्डल की सीमा पर भी जाकर हम कुछ नही देख सकते। क्योंकि जाते ही घोर अन्ध तमस ही दिखाई देगा। जैसा कि सीता के अन्वेषण के समय अपनी गति से सीमान्त तक जाकर जामवन्त जी ने देखा और सुग्रीव को बताया—

एतावद् वानरैः शक्यं गन्तुं वानरपुंगवा।

अभास्करममर्यादं न जानीमस्ततः परम्।। वा. रा. 4.40.68

इस प्रकार शास्त्रीय प्रमाण एवं गणितीय आधार पर हम कह सकते हैं कि काल का भी चक्रभ्रमण होता है, किन्तु इसकी अवधि निर्धारित करना दुष्कर है।

कालमापन हेतु जिन नव मानों का उल्लेख किया गया है उनमें से चार कालमान हमारी दिनचर्या से जुड़े हुये हैं। वे हैं सौर-चन्द्र-सावन और नाक्षत्र।

जब हमे मास से अधिक काल की गणना करनी होती है तब हम सौर मान का प्रयोग करते हैं। सूर्य एकमास तक एक राशि में रहता है। १२ राशियों में भ्रमण करने में १२ मास अर्थात् एक वर्ष लगता है। मास की गणना हम चन्द्रमास करते है। अमान्त से अमान्त तक अथवा पूर्णिमा से पूर्णिमा तक एक चान्द्रमास होता है। दिन की गणना हम पृथ्वी के दिन अथवा सावन दिन से करते हैं। दो सूर्योदय के मध्य का काल सावन दिन या पृथ्वी का दिन होता है। एक नक्षत्र के उदय काल से द्वितीय उदय काल तक नाक्षत्र काल होता है। इस काल की अवधि सुनिश्चित है। ६० घटी (ठीक २४ घण्टे) बाद यह परिभ्रमण कर पुन: उसी विन्दु पर आ जाता है। इसलिए नाक्षत्र दिन का मान सदैव एक समान २४ घण्टे या ६० घटी का ही होता है। इसी स्थिर काल के आधार पर घण्टा मिनट का विचार किया जाता है या घटी पल आदि लघु काल खण्डों का विभाजन या गणना की जाती है। इस काल विभाजन व्यवस्था को आचार्य भास्कर ने अपनी प्रसिद्ध रचना सिद्धान्त शिरोमणि में स्पष्ट रूप से प्रतिपादित किया है—

वर्षायनर्तुयुगपूर्वकमत्र सौरान्
मासांस्तथा च तिथयस्तुहिनांशुमानात्।
यत्कृच्छ्रसूतकचिकित्सितवासाराद्यम्
तत् सावनाच्च घटिकादिकमार्क्षमानात् ।। (सि. शि. म. अ.क)

घट्यादि लघुकालखण्डों की गणना नाक्षत्र मान के अतिरिक्त अन्य सौरादि मानों से सम्भव नहीं हैं, उन मानों के प्रतिदिन न्यूनाधिक होने के कारण। नाक्षत्र काल में कोई अन्तर नहीं आता क्योंकि इसका मान ६० घटी या २४ घण्टे का प्रतिदिन होता है। घटी यन्त्र (घड़ी) द्वारा सूचित काल नाक्षत्र काल ही होता है, प्रतिदिन समान रूप होने के कारण। इस प्रकार आवश्यकतानुसार विभिन्न कालमानों का उपयोग होता रहा है तथा आज भी हो रहा है। दैनिक उपयोग में आने वाले कालमानों का विवरण इस प्रकार है—

## काल के अवयव

| अमूर्त काल (सूक्ष्म) | मूर्त काल (स्थूल) |
|---|---|
| पद्मपत्र भेदनकाल =१ त्रुटि | ६ विपल = १ प्राण |
| ६० त्रुटि = १रेणु | ६० विपल = १ पल |
| ६० रेणु = १ लव | ६० पल = १ घटी |
| ६० लव = १ लीक्षक | ६० घटी = १ अहोरात्र |
| | ३० अहोरात्र= १ मास |
| ६० लीक्षक = १ प्राण | १२ मास = १ वर्ष |

**घण्टा-मिनट और घटी-पल**

२४ सेकेण्ड = ६० विपल = १ पल

२४ मिनट = ६० पल = १ घटी

२४ घण्टा = ६० घटी = १ अहोरात्र

काल की बड़ी इकाई

कृतयुग = १७२८०००

त्रेतायुग = १२९६०००

द्वापरयुग = ८६४००० सौरवर्ष

कलियुग = ४३२००० सौरवर्ष

महायुग = ४३२०००० सौरवर्ष

मनु = ३०६७२०००० सौरवर्ष

कल्प = ४३२००००००० सौरवर्ष = ब्राह्म दिन

ब्राह्म अहोरात्र = ८६४००००००० सौरवर्ष

